तदिङ्गितं चेष्टितं निमिषितमिति स शब्दः ? नेत्याह । क्रिया नाम सा । यत्तर्हि तच्छुक्लो नीलः कपिलः कपोत इति स शब्दः । नेत्याह । गुणो नाम सः ।

यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः ? नेत्याह । आकृतिर्नाम सा । कस्तर्हि शब्दः ? येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः ।

---

प्रश्नः । सास्नेति—सास्ना च लाङ्गूलं च ककुदं च खुराश्च विषाणे च एषां समाहारः सास्नालाङ्गूलककुदखुरविषाणम्, तदस्यास्तीति सास्नालाङ्गूलककुदखुरविषाणी, स चासावर्थश्च, तद्रूपमिति विग्रहः । यत्तत् सास्नादिमद् अर्थरूपं वस्तु सशब्दशब्दाभिधेयः किमित्यर्थः । "सास्ना तु गलकम्बलः" । "पुच्छोऽस्त्री लूमलाङ्गूले" । "प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" । "अतस्त्रिषु विषाणं स्यात् पशुशृङ्गेभदन्तयोः" इत्यमरः ॥ द्रव्यं नामेति—तत् तु द्रव्यमिति प्रसिद्धम् अतो नासौ शब्दशब्दस्य अभिधेयः । यदि द्रव्याणामनुशासनं विवक्षितमभविष्यत् अथ द्रव्यानुशासनम् इत्येवावक्ष्यत् । द्रव्याणि तु पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव । प्रश्नवादिनः क्रियायाः शब्दत्वाशङ्कायामाह यत्तर्हीति । इङ्गितम् अभिप्रायस्य सूचकः शरीरव्यापारः । चेष्टितं कायपरिस्पन्दः । निमिषितम् अक्षिव्यापारः । क्रियेति—इङ्गितादेः प्राधान्येन कृदन्तधातूपस्थाप्यतया क्रियात्वान्न शब्दशब्दाभिधेयत्वं भिन्नेन्द्रियग्राह्यत्वेन शब्दात् क्रियाया भेदस्य प्रसिद्धत्वात् ।

यदि क्रिया न शब्दस्तर्हि यत्तच्छुक्लादिकं गवि दृश्यते स किं शब्दशब्दाभिधेय इत्याशङ्क्याह यत्तदिति । द्रव्यस्य प्रागुपन्यासाद् गुणमात्राभिधायिनोऽत्र शुक्लादयो द्रष्टव्याः । यतः शुक्लादयः शब्दा गुणे गुणिनि च वर्तन्ते । कपिलः पीताधिको हरिद्रक्तसितवर्णः । चित्रवर्णविशेष इति यावत् । कपोतः चित्रः कपोताभो वर्णः । ( कबूतरी रंग इति प्रसिद्धः ) गुण इति–रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः ॥

भिन्नेषु वस्तुषु अभिन्नम् एकम् । अनेन सामान्यस्यैकत्वं कथ्यते । वस्तुषु छिन्नेषु अच्छिन्नम् । अनेन सामान्यस्य नित्यत्वं सूच्यते । एवं च नित्यमेकमनेकानुगतं सामान्यमिति सामान्यलक्षणं सूचितम् । सामान्यभूतमिति—सत्ताख्यं महासामान्यं द्रव्यादित्रिकवृत्तित्वात्, तदिव । भूतशब्द उपमार्थे । यथा पितृभूत-

**अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते । तद्यथा—शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवकः, इति ध्वनिं कुर्वन्नेवमुच्यते । तस्माद् ध्वनिः शब्दः ।**

**कानि पुनः शब्दानुशासनस्य प्रयोजनानि ? रक्षोहागमलघ्वसंदेहाः प्रयोजनम् । रक्षार्थं वेदानामध्येयं व्याकरणम् । लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यतीति । ऊहः खल्वपि—न**

---

इति, पितृतुल्य इत्यर्थः । आकृतिरिति—आकृतिर्जातिः गुणक्रियाविशिष्टोऽवयवसंनिवेशविशेषश्च । आक्रियते व्यवच्छिद्यते स्वाश्रयोऽनयेति व्युत्पत्तेः ।

येनोच्चारितेनेति—वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति । उच्चारितेन प्रकाशितेन, शरीरमारुताभिहतकण्ठादिस्थानैः साक्षाद् अवयवद्वारा वा अभिव्यक्तेन येनेत्यर्थः । संप्रत्ययो ज्ञानम् । अत्र येनेत्येकवचनेन विषाणिनामिति बहुवचनेन च अनेकोच्चारणविषयगौरित्यस्यैकत्वं सूचितम् ।

प्रतीतेति—प्रतीतश्चासौ पदार्थश्च प्रतीतपदार्थः, स एव प्रतीतपदार्थकः । स्वार्थे कन् । पदार्थपदस्य तद्बोधके लक्षणा । तदेवं प्रसिद्धो गवादिपदार्थबोधक इत्यर्थो लभ्यते इति गुरुप्रसादशास्त्रिणः । अस्माकं मते तु प्रतीतः पदार्थो येन यस्माद्वेति बहुव्रीहिसमासे सर्वं समीचीनम् । ध्वनिः ककारादिवर्णात्मको ध्वनिः । लोके व्यवहर्तृषु । व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद् वर्णरूपध्वनिसमूह एव शब्द इत्यर्थः ।

शब्दानुशासनस्य—शब्दज्ञानफलकव्याकरणाध्ययनस्येत्यर्थः । किं सन्ध्योपासनादिवद् व्याकरणाध्ययनं नित्यं कर्म अथ काम्यम् इति प्रश्नः । शब्दज्ञानद्वाराध्ययनस्य तदज्ञानप्राप्तप्रत्यवायपरिहारः फलमुत तदतिरिक्तमपि किंचिद् इति प्रश्नाशयः । प्रयोजनशब्दः करणव्युत्पत्त्या प्रयोजकपरोऽपि । तेन व्याकरणाध्ययनस्य प्रयोजकं किंचिदस्ति न वेति प्रश्नाशयो बोध्यः ।

रक्षेति—लोके लोपाद्यदृष्टं वेदे दृष्ट्वा भ्राम्येदवैयाकरणः । वैयाकरणस्तु न भ्रमति वेदार्थं चाध्यवस्यति । व्याकरणाध्ययनावगतवर्णलोपागमवर्णविकारो गृहीतप्रकृतिप्रत्ययविभागो वेदान् पालयिष्यतीत्यर्थः । हिर्हेतौ । सम्यग् वेदार्थावगतिपूर्वकम् । लोपागमयोरुदाहरणम्—'देवा अदुहेति' । दुहेर्लङो झस्याऽदादेशे कृते 'लोपस्त आत्मनेपदेषु' इति तलोपः, 'बहुलं छन्दसि' इति रुटि सति रूपमेतत् । वर्णविकारो यथा—उद्ग्राभं च निग्राभं चेति । 'हृग्रहोरछन्दसि हस्येति वक्तव्यम्' इति हकारस्य भकारः ।

सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः । ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः । तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् ।

आगमः खल्वपि—“ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च” इति ॥ प्रधानं च षट्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान्भवति ।

लघ्वर्थं चाध्येयं व्याकरणम् “ब्राह्मणेनावश्यं शब्दा ज्ञेयाः” इति । नचान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम् ॥

---

ऊह इति—इह यस्मिन्यागे इति कर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः । येन चोपजीव्यते सा विकृतिः । ‘प्रकृतिवद्विकृतिः कर्तव्या’ इति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग् विजानाति । तत्राग्नेर्मन्त्रोऽस्ति—अग्नये त्वा जुष्टं निर्वपामि इति । तत्र ‘सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः’ इति सौर्ये चरौ मन्त्रे ऊह्यते ‘सूर्याय त्वा जुष्टं निर्वपामि’ इति । खल्वपीति निपातसमुदायो निश्चयार्थः । सर्वैर्लिङ्गैः–सकललिङ्गबोधकटाबादिभिः । युक्ता इति शेषः । सर्वाभिर्विभक्तिभिः सर्वविभक्त्यन्तपदैः । न निगदिताः न पठिताः । ते मन्त्राः । पुरुषेण ऋत्विगादिना । यथायथं यथोचितम् । विपरिणमयितव्याः तत्तल्लिङ्गादिबोधकपदघटिताः पाठ्याः । तस्मादिति यस्मादवैयाकरणो न शक्नोति सम्यग् विपरिणमयितुं तस्मादित्यर्थः ।

आगमः श्रुतिः । खल्वपीत्यस्य प्रयोजक इति शेषः । आगमः प्रयोजकः प्रवर्तको नित्यकर्मतां व्याकरणाध्ययनस्य दर्शयति । निष्कारण इति दृष्टं कारणमनपेक्ष्येत्यर्थः । कार्यते यागादिरनेन तत् कारणमिति व्युत्पत्त्या स्वर्गादिफलवाचकः कारणशब्द इत्यर्थः । एवं च ‘निष्कारण’ इत्यस्य फलानुसंधानरहितो नित्य इत्यर्थो लभ्यते । षडङ्ग इति शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्यौतिषाङ्गसहितः । वेदः स्वशाखारूपः । ज्ञेय इत्यस्य सम्यगर्थबोधपर्यवसायि अध्ययनं कार्यम् इत्यर्थे तात्पर्यम् । प्रधानमिति–पदपदार्थावगमस्य व्याकरणनिमित्तत्वात् तन्मूलत्वाद्वाक्यवाक्यार्थावसायस्य । प्रधाने प्रधानविषये व्याकरणाध्ययनविषये । फलवानिति–अत्र फलपदेन वाक्यार्थावगमो विवक्षितः । एतच्छास्त्रं च पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगीति बोध्यम् ।

लघ्वर्थमिति—लाघवेन शब्दज्ञानमस्य प्रयोजनम् । प्रक्रियारूपलघुभूतोपायज्ञानं व्याकरणस्य प्रयोजनम् । प्रकृतिप्रत्ययविभागादिरूपया प्रक्रियया हि लाघवेन

असंदेहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तस्यां संदेहः—स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति । तां नावैयाकरणः स्वरतोऽध्यवस्यति—यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति ॥

इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि—तेऽसुराः । दुष्टः शब्दः । यदधीतम् । यस्तु प्रयुङ्क्ते । अविद्वांसः । विभक्तिं कुर्वन्ति । यो वा इमाम् । चत्वारि । उत त्वः । सक्तुमिव । सारस्वतीम् । दशम्यां पुत्रस्य । सुदेवो असि वरुण इति ॥

तेऽसुराः । "तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुस्तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा

---

शास्त्रप्रवृत्तिः शक्या कर्तुम् इत्याशयः । अतो हेतोर्लघ्वर्थमध्येयं व्याकरणमित्यर्थः । अन्तरेण व्याकरणाध्ययनं विना ।

असंदेहार्थं संदेहानुत्पत्त्यर्थम् । तस्यां श्रुतौ । अनड्वाही गौः । पृषती शब्देनात्र मत्वर्थलक्षणया पृषत्वती ग्राह्या । पृषत्वती च बिन्दुमती । पृषन्ति बिन्दवः । अत्र संदेहः कर्मधारयोऽयं बहुव्रीहिर्वेति ? तत्र कर्मधारयपक्षे पृषतीशब्देन पृषत्वती बिन्दुमती गौरेवाभिधीयते, स्थूलापि सैव, बिन्दूनां स्थौल्यं तनुत्वं वा यथा तथास्तु । बहुव्रीहौ तु स्थौल्यं पृषत्स्वेवेति, गौस्तु स्थूला कृशा वेत्यत्रानादरः । तत्र लकाराकारे उदात्तत्वं दृष्ट्वा पूर्वपदप्रकृतिस्वरेण बहुव्रीहिं वैयाकरणो निश्चिनोति । ततश्च निश्चयेन प्रतिबन्धात् संशयानुत्पादः । स एवासंदेहः । बहुव्रीहिरिति—'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरस्य तत्र विधानात् । तत्पुरुषः प्रकृते कर्मधारयः ।

मुख्यानि प्रयोजनानि प्रदर्श्य आनुषङ्गिकाणि प्रदर्शयति । भूय इति पुनरित्यर्थः—तेऽसुरा इति—'हैहेप्रयोगे हैहयोः' इति प्लुते प्रकृतिभावे च कर्तव्ये तदकरणं म्लेच्छनमिति । पदद्विर्वचने वाक्यद्विर्वचनं लत्वं च म्लेच्छनमित्यपरे । न म्लेच्छितवा इत्यस्य पर्यायो नापभाषितवा इति । न म्लेच्छितवै इत्येतत् म्लेच्छभाषाविषयमिति भ्रमनिवृत्त्यर्थं तद्विवरणं—नापभाषितवै इति । ह वै इति प्रसिद्धौ । अपशब्दत्वं व्याकरणानुगतशब्दस्येषद्भ्रंशन एव प्रसिद्धम् । म्लेच्छो नाम पुरुषविशेषो देशविशेषो वा, स तु नात्राभिप्रेतः । निन्दावचनान्म्लेच्छतेरिति भावः । निन्दा च शास्त्रबोधित-

एष यदपशब्दः" । म्लेच्छा मा भूमेत्यध्येयं व्याकरणम् ।

दुष्टः शब्दः

दुष्टः शब्दः स्वरतो वर्णतो वा ।
मिथ्या प्रयुक्तो न तमर्थमाह ॥
स वाग्वज्रो यजमानं हिनस्ति ।
यथेन्द्रशत्रुः स्वरतोपराधाद् ॥ इति ॥

दुष्टाञ् छब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् ॥

यदधीतम्—

यदधीतमविज्ञातं निगदेनैव शब्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम् ॥

---

विपरीतोच्चारणेन पापसाधनत्वात् । एवं च म्लेच्छा इत्यस्य निन्द्या इत्यर्थ इति दिक् । माध्यंदिनानां शतपथब्राह्मणे तु 'हेलवो हेलव' इति वदन्तः इति पठित्वा 'तस्माद् ब्राह्मणो न म्लेच्छेत्' इति पठ्यते । तत्र यकारस्थाने वकारोऽपशब्द इति स्पष्टमेव ।

वर्णापराधे दोषयुक्त्वा वाक्यापराधे दोषमाह दुष्ट इति । स स्वरवर्णदुष्टः शब्दः । वाग्वज्रः ऋत्विग्वाग्रूपो वज्रः । हिनस्ति हिंस्यात् । स्वरतः स्वरेण । मिथ्याप्रयुक्त इति । यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थः । यथेन्द्रशत्रुशब्दः स्वरदोषाद्यजमानं हिंसितवानित्यर्थः । पुरा किल विश्वरूपाख्ये त्वष्टुः पुत्रे इन्द्रेण हते सति कुपितस्त्वष्टा इन्द्रस्य हन्तारं वृत्राख्यं पुत्रान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवान् । तत्र च इन्द्रस्य शातयिता शत्रुः हिंसक इति यावत् । तथाभूतः सन् वर्धस्वेति प्रतिपादितुं इन्द्रशत्रुर्वर्धस्वेति प्रयुक्तम् । एवं स्थिते इन्द्रशत्रुशब्दे तत्पुरुषसमासप्रयुक्तेऽन्तोदात्ते वक्तव्ये प्रमादादाद्युदात्तः किलोक्तः । तथा च पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थो लब्धः । तेनेन्द्र एवास्य हिंसकः संपन्न इति श्रुतीतिहासपुराणादिषु प्रसिद्धम् । तदिहोदाहरणतयोक्तम् । अत्र हि आद्युदात्तकरणमेव स्वरापराधः ।

यदधीतमिति—अविज्ञातमिति–अविदितस्वरादिसंस्कारत्वाद् अर्थापरिज्ञानाद्वा । निगदेन पाठमात्रेण । शब्यते उच्चार्यते । अनग्नाविति बहुव्रीहिस्तत्पुरुषो वा 'अनग्नौ अग्निरहिते कुण्डादौ' भस्मनां चये वेति बहुव्रीहिपक्षेऽर्थः । तत्पुरुषे तु अनग्नौ जलादावित्यर्थः । न ज्वलति न प्रकाशते निष्फलं भवति । अतो निषिद्धमध्ययनं मा भूदिति व्याकरणमध्येयमिति तात्पर्यम् ।

यस्तु प्रयुङ्क्ते—

यस्तु प्रयुङ्क्ते कुशलो विशेषे।
शब्दान्यथावद् व्यवहारकाले॥
सोऽनन्तमाप्नोति जयं परत्र।
वाग्योगविद् दुष्यति चापशब्दैः॥

[ दुष्यति चापशब्दैः ]

कः ? वाग्योगविदेव। कुत एतत् ? यो हि शब्दाञ् जानात्यपशब्दानप्यसौ जानाति। यथैव हि शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्यधर्मः। अथवा भूयानधर्मः प्राप्नोति। भूयांसोऽपशब्दाः, अल्पीयांसः शब्दा इति। एकैकस्य हि शब्दस्य बहवोपभ्रंशाः। तद्यथा गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्यादयो बहवोपभ्रंशाः। अथ योऽवाग्योगविद्, अज्ञानं तस्य शरणम्॥

विषम उपन्यासः। नात्यन्तायाज्ञानं शरणं भवितुमर्हति। योह्यजानन् वै ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपि मन्ये पतितः स्यात्।

---

यस्तु प्रयुङ्क्ते इति—अनेनाभ्युदयहेतुत्वं व्याकरणाध्ययनस्य दर्शयति। कुशलः यथाशास्त्रं शब्दप्रयोगवित्। विशेषे शक्यलक्ष्यादितत्तदर्थविशेषे। सः वाग्योगवित् प्रयोगवित्। जयम् उत्कर्षम्। परत्र स्वर्गलोके। एतावता शब्दविदः प्रशंसोपनिबद्धा। अथ 'दुष्यति चापशब्दैः' इत्यत्र कर्तुरनुपादानात् पृच्छति क इति। एकदेशी स्वयमुत्तरयति वागिति। वाग्योगविदः कथं दोष इत्याशयेन तटस्थः पृच्छति कुत इति। असौ वाग्योगविद् वैयाकरणः। अधर्म इति अपशब्दज्ञानादधर्मोऽपीत्यर्थः। शब्दा इतीति। इतिरत्र हेतौ। यतो बहवोऽपशब्दा अतो भूयानधर्मः प्राप्नोति। बहव इति। देशकालावस्थादिभेदेन एकैकस्यापि शब्दस्य अपशब्दानां भूयस्त्वमित्यर्थः। अवागिति। अवैयाकरण इत्यर्थः। अज्ञानमिति। तथा च तिरश्चां ब्रह्महत्यादिफलाभावः।

विषमः अनुचितः। उपन्यासः हेतुप्रदर्शनम्। अजानन् निषेधशास्त्रमजानन्। मन्ये निश्चिनोमि। तिरश्चामत्यन्तायोग्यत्वाद् अस्त्वज्ञानं शरणं मनुष्याणां तु योग्यत्वात् तैर्निषिद्धानुष्ठानवर्जनार्थमवश्यं शास्त्रं विज्ञेयम्। अतोऽवाग्विदो महाननर्थ इति भावः।

**एवं तर्हि—'सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः'।**

**कः ? अवाग्योगविदेव । अथ यो वाग्योगविद्, विज्ञानं तस्य शरणम् ।**

**क्व पुनरिदं पठितम् ? भ्राजा नाम श्लोकाः । किं च भोः श्लोका अपि प्रमाणम् ? किं चातः ? यदि श्लोका अपि प्रमाणम्, अयमपि श्लोकः प्रमाणं भवितुमर्हति—**

**यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ।**
**पीतं न गमयेत्स्वर्गं किं तत् क्रतुगतं नयेत् ॥ इति ॥**

**प्रमत्तगीत एष तत्र भवतः । यस्त्वप्रमत्तगीतस्तत्प्रमाणम् । यस्तु प्रयुङ्क्ते ।**

---

सिद्धान्ती तावदुत्तरयति एवमिति । प्रकरणात् सामर्थ्यं बलीयः इत्याह—अवाग्योगविदिति । वाग्योगवित्तूभयज्ञोऽपि शब्दान् प्रयुङ्क्ते नापशब्दानिति ज्ञानपूर्वकात् प्रयोगाद् अभ्युदयभाग् भवति । विज्ञानम् । लक्षणस्मरणपूर्वकमर्थविशेषे साधुशब्दप्रयोगात्मकम् ।

श्लोकस्यापरिज्ञानात् पृच्छति क्व इति । किं तदस्ति यत्रेदं पठितमिति । अतएव श्लोका इति प्रथमान्तेनोक्तम् । अन्यथा श्लोकेष्विति वाच्यं स्यात् । भ्राजा इति । भ्राजा नाम कात्यायनप्रणीताः श्लोका इत्याहुः । आप्तोक्तत्वापरिज्ञानादाह—किं च भो इति । किं चात इति । अतः प्रश्नात् किं विवक्षितमित्यर्थः । किं चात इति निपातसमुदायः किमित्यर्थे वर्तते इति केचित् । यदिति । ताम्रवर्णानां लोहितवर्णानां घटीनां कलसानां मण्डलं समूहः । लक्षणया तत्स्थं मद्यम् यदि पीतं सत् स्वर्गं पातारं न गमयति तत् तर्हि क्रतुगतं स्वल्पं तन्मद्यं पातारं किं स्वर्गं नयेत् नैव नेतुं शक्नुयादित्यर्थः ।

प्रमत्तगीत इति । प्रमादेन विप्रतिपन्नत्वेन गीत इत्यर्थः । भावे क्तान्तः । यस्त्वप्रमादेन गीतो यस्य कस्यापि तत्प्रमाणम् । कात्यायनोपनिबद्धभ्राजाख्यश्लोकमध्यपठितस्य त्वस्य श्लोकस्य श्रुतिरप्यनुग्राहिकास्ति—"एकः शब्दः सुज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवति" इति ।

अविद्वांसः—

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्॥

अभिवादे स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम्॥

[अविद्वांसः]

विभक्तिं कुर्वन्ति—

याज्ञिकाः पठन्ति—"प्रयाजाः सविभक्तिकाः कार्याः" इति। न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्। [विभक्तिं कुर्वन्ति]

यो वा इमाम्—

"यो वा इमां पदशः स्वरशोऽक्षरशश्च वाचं विदधाति

---

अविद्वांसः व्याकरणमविद्वांसः, अनधीतव्याकरण इति यावत्। प्रत्यभिवादे हि गुरुणा प्लुतः कार्यः। यस्तु प्लुतं कर्तुं न जानाति स स्त्रीवद् वक्तव्यो ऽयमहमिति, न तु 'अभिवादये देवदत्तोऽहम्' इत्यादिना संस्कृतवाक्येनेत्यर्थः। प्रत्यभिवादे अभिवादनान्तरप्रयोज्ये वचने नाम्नोऽभिवादकनाम्नष्टेः प्लुतिं कर्तुं ये न जानन्ति तेषु कामं निःशङ्कं विप्रोष्य प्रवासादेत्य यद्वा कामं विध्यनुसारमन्तरैवेत्यर्थः। स्त्रीष्विव पूज्यजनन्यादीनां पुरत इव। तेषु तेषामपि पुरतो गत्वा। अयमहम्—अयमहं चैत्रः समायातो भवतां दर्शनायेत्येवमेव वदेत् आत्मानं निवेदयेत्। स्वपरिचयं वदन्ने-त्वभिवादनं कुर्यात्।

प्रयाजा इति। प्रयाजमन्त्रा ऊह्यमानाग्निशब्दप्रकृतिकविभक्तियुक्ता इत्यर्थः। 'समिधः समिधोऽग्नेऽग्न आज्यस्य व्यन्तु अग्निरग्नि'रिति। यद्यपि प्रकृतौ प्रयाज-मन्त्राः सविभक्तिका एव पठ्यन्ते तथापि यदि आधानादनन्तरं यजमान उदरव्यथा-वान् स्यात् यदि वा संवत्सरमध्ये तस्य महती विपत् स्यात् तदा नैमित्तिकीं पुनर-धेयेष्टिं विधाय तत्रेदमाम्नातं 'प्रयाजाः सविभक्तिका' इति। तत्र केवलं विभक्तेः प्रयोगानर्हत्वात् प्रकृतिराक्षिप्यते सा चाग्निशब्दरूपा न तु या काचित्। आदितश्चतुर्षु प्रयाजेषु चतस्रो विभक्तयोऽग्निशब्दप्रकृतिकाः पठ्यन्ते इत्यादिश्रौतग्रन्थेषु द्रष्टव्यम्।

यः पुमान्, वै इति निश्चयेन, इमाम् प्रत्यक्षमनुभूयमानाम् वाचं वेदरूपाम्। पदशः पदं पदम्। 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्। स्वरशः प्रतिस्वरम्। अक्षरशः प्रत्यक्षरम्। अक्षरं व्यञ्जनसहितोऽच्। विदधाति संस्करोति। आर्त्विजीन

स आर्त्विजीनो भवति" आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणम् ।
[ यो वा इमाम् ]

चत्वारि—

चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्याँ आविवेश ॥

चत्वारि शृङ्गाणि । चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च ॥ त्रयो अस्य पादाः—त्रयः काला भूतभविष्यद्वर्तमानाः । द्वे शीर्षे । द्वौ शब्दात्मानौ नित्यः कार्यश्च । सप्तहस्तासो अस्य । सप्त विभक्तयः । त्रिधा बद्धः । त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति । वृषभो वर्षणात् । रोरवीति शब्दं करोति ।

कुत एतद् ? । रौतिः शब्दकर्मा । महो देवो मर्त्याँ आविवेशेति । महान्देवः शब्दः । मर्त्या मरणधर्माणो मनुष्यास्तानाविवेश । महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम् ।

---

इति । ऋत्विजमर्हत्यार्त्विजीनो यजमानः । ऋत्विक्कर्मार्हतीति याजकोऽप्यार्त्विजीनः । 'यज्ञर्त्विग्भ्यां घखञौ' इति सूत्रेण 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानम्' इति च वार्तिकेन खञ् ।

चत्वारीति । ऋङ्मन्त्रोऽयम् । शब्दस्य वृषभत्वेन निरूपणम् । शृङ्गा शृङ्गाणि । मह इति । मह्यते पूज्यते इति महः । 'कर्मणि घञर्थे कविधानम्' इति कः । महच्छब्दपर्यायोऽयं महशब्दः । शृङ्गाणि शृङ्गस्थानीयानि । पदजातानि पदानि । नाम सुबन्तम् । आख्यातं तिङन्तम् । उपसर्गनिपातयोः पृथगुपादानं गोबलीवर्दन्यायेन । पादाः पादस्थानीयाः शब्दात्मानौ शब्दभेदौ । त्रिधा त्रिभिः प्रकारैर्बद्धः । फलितार्थमाह त्रिष्विति । बद्धः अवस्थितः । उरसि 'हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् । उरस्यं तं विजानीयात्' इति । कण्ठ इति अनेन मुखान्तर्गतकण्ठादिस्थानमुपलक्ष्यते । शिरसि इति 'स्युर्मूर्धन्या ऋटुरषाः' । वृषभः मोक्षादिफलप्रदः । देवः ब्रह्म, परब्रह्मस्वरूपो देवः अन्तर्यामिरूपः शब्दः । मर्त्यान् विदुषः । आविवेश । शब्दव्याजेन समनुप्रविष्टः । स्वाभेदमाविश्चकारेति यावत् । रोरवीति शब्दं करोति ।

साम्यं सायुज्यमभेदः ।

अपर आह—

चत्वारि वाक्परिमिता पदानि।
तानि विदुर्ब्राह्मणा ये मनीषिणः॥
गुहा त्रीणि निहिता नेङ्गयन्ति।
तुरीयं वाचो मनुष्या वदन्ति॥

'चत्वारि वाक्परिमिता पदानि'। चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च॥ 'तानि विदुर्ब्राह्मणा ये मनीषिणः'। मनस ईषिणो मनीषिणः। 'गुहा त्रीणि निहिता नेङ्गयन्ति'। गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते, न निमिषन्तीत्यर्थः। 'तुरीयं वाचो मनुष्या वदन्ति'। तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः। [ चत्वारि ]

उत त्वः—

उत त्वः पश्यन्न ददर्श वाचम्
उत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे
जायेव पत्य उशती सुवासाः॥

---

चत्वारीत्यनेन एकदेशेन वाक्यान्तरमपि सूच्यत इत्याह अपर इति। परिमिता परिमितानि परिच्छिन्नानि एतावन्त्येवेत्यर्थः। मनीषिशब्दः पृषोदरादित्वात्साधुः। मनस ईषिणः। चित्तशुद्धिक्रमेण वशीकर्तारो विषयान्तरेभ्यो व्यावृत्ताः। ते च वैयाकरणाः। कथं मनीषिण एव विन्दन्तीत्याह–गुहेति। अज्ञानमेव गुहा तस्याम् इत्यर्थः। 'सुपां सुलुक्' इति सप्तम्या लुक्। व्याकरणप्रदीपेन तु तानि प्रकाशन्ते। न निमिषन्ति न जानन्ति। तुरीयमिति—वाचः परापश्यन्तीमध्यमावैखरीरूपाया नामाख्यातोपसर्गनिपातरूपायाश्च प्रत्येकं तुरीयं चतुर्थं भागं मनुष्या अवैयाकरणा लोका वदन्ति भाषन्ते। मनीषिण एव संपूर्णां पादचतुष्टयवतीं वाचं भाषन्ते, अवैयाकरणास्तु केवलं वैखरीरूपं तुरीयं पादमात्रं भाषन्ते इति यावत्। तस्मात्सकलपदज्ञानाय मनीषित्वाय चाध्येयं व्याकरणमिति शेषः।

उत त्वः। त्वशब्दोऽन्यवाची। उतशब्दोऽपि शब्दस्यार्थे। स च भिन्नक्रमः। प्रत्यक्षेण शब्दस्वरूपमुपलभमानोप्यर्थापरिज्ञानान्न पश्यतीत्यर्थः। खल्विति निश्चये। त्वः अवैयाकरणः। न पश्यति। अर्थापरिज्ञानान्न तत्त्वतो जानाति। शृण्वन्नपि। आपाततः स्वरूपेण शृण्वन्नपि न शृणोति। तत्त्वतो न शृणोति।

उत त्वः । अपि खल्वेकः पश्यन्नपि न पश्यति वाचम् । अपि खल्वेकः शृण्वन्नपि न शृणोत्येनामिति । अविद्वांसमाहार्धम् । 'उतो त्वस्मै तन्वं विसस्रे' तनुं विवृणुते । 'जायेव पत्य उशती सुवासाः' । तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाग् वाग्विदे स्वात्मानं विवृणुते । वाङ् नो विवृणुयाद् आत्मानमित्यध्येयं व्याकरणम् । [ उत त्वः ]

सक्तुमिव—

सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥

सक्तुः—सचतेर्दुर्धावो भवति । कसतेर्वा विपरीताद्विकसितो भवति । 'तितउ' परिपवनं भवति—ततवद्वा तुन्नवद्वा । धीरा ध्यानवन्तः । मनसा प्रज्ञानेन । वाचमक्रत वाचमकृषत । अत्रा सखायः सख्यानि जानते । अत्र सखायः सन्तः सख्यानि

---

तदर्थापरिज्ञानेन फलाभावान्निष्फलं तच्छ्रवणमित्याशयः । अर्धम् अस्या ऋचोऽर्धम् । उतो इति उत उ इति छेदः । त्वस्मै वैयाकरणाय कस्मैचित् । विवृणुते प्रकाशयति । तनुं स्वात्मानम् । उशती । वश कान्तावित्यस्य शतरि रूपम् ।

सक्तुमिवेति—ये यत्र व्याकरणे धीरा ध्यानवन्तः सन्तस्तितउना सक्तुमिव ध्यानयुक्तमनसा तत्करणज्ञानेन वाचमक्रत अकृषत—असाधुभ्यो विविक्तां कृतवन्तस्ते तत्करणेन शुद्धचित्ताः । अत्र ब्रह्मप्रतिपादकशब्दे शब्दार्थयोरभेदबुद्ध्या सखायः समानख्यातयः समानज्ञानाः तच्छब्दे ब्रह्मैकत्वज्ञानवन्तस्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मनिरूपिताभेदज्ञानवन्तः सख्यानि सायुज्यानि जानते प्राप्नुवन्तीत्यर्थः । यत एषां वाचि भद्रा लक्ष्मीः स्वप्रकाशब्रह्मरूपा अधि अधिकं निहिता स्थिता भवतीत्यर्थः । अयं भावः ये शास्त्रतः प्रकृतिप्रत्ययविभागेन साधून् ज्ञात्वा शास्त्रार्थध्यानवन्तो मानसज्ञानेन च वाचमसाधुभ्यः पृथक् कृतवन्तस्ते तज्ज्ञानपूर्वकसाधुशब्दप्रयोगैर्लब्धान्तःकरणशुद्धयोऽत्र य एष दुर्गो मार्गो ब्रह्मरूपस्तत्रात्मना सह समानख्यातयस्त्यक्तभेदभावनाः सख्यानि सायुज्यानि प्राप्नुवते ।

सचतेरिति । सच सेचन इत्यस्य । दुर्धावः दुःशोधः । यथा तितउना सक्तोस्तुषाद्यपनीयते तथा व्याकरणेन वाचोऽपशब्दा इत्यर्थः । कुरुतेरिति । पृषोदरादि-

जानते । क ? य एष दुर्गो मार्गः, एकगम्यो वाग्विषयः । के पुनस्ते ? वैयाकरणाः । कुत एतत् ? 'भद्रैषां लक्ष्मीर्निहिताधि वाचि ।' एषां वाचि भद्रा लक्ष्मीर्निहिता भवति । लक्ष्मीर्लक्षणाद् भासनात् परिवृढा भवति । [ सक्तुमिव ]

'सारस्वतीम्' । याज्ञिकाः पठन्ति—'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्' इति । प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम् । [ सारस्वतीम् ]

दशम्यां पुत्रस्य—याज्ञिकाः पठन्ति—'दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद् घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् । तद्धि प्रतिष्ठिततमं भवति । द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्' इति । न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् ।
[ दशम्यां पुत्रस्य ]

---

त्वाद्वर्णव्यत्ययः । ततवदिति विस्तारयुक्तमित्यर्थः । तुन्नवदिति । बहुच्छिद्रम् । धीरा इति वैयाकरणाः । वाचमिति । अपशब्देभ्यो विविक्तां कृतवन्तः । सख्यानि सायुज्यानि । यत एषां वाचि भद्रा लक्ष्मीः सर्वभासकब्रह्मरूपा सा अधि अधिकं निहिता स्थिता भवति । परिवृढा अज्ञाननिवर्तने प्रभ्वी ।

प्रायश्चित्तीयां प्रायश्चित्ते भवाम्, प्रायश्चित्तसंबन्धिनीम् । भवार्थे वृद्धाच्छः । सारस्वतीं सरस्वतीदेवताम् । प्रायश्चित्तीयाः प्रायश्चित्ताय पापशोधनाय श्रुतिस्मृतिविहिताय कर्मणे हितास्तन्निमित्तोत्पादना मा भूमेत्यर्थः ।

दशम्यामिति । औपश्लेषिकेऽधिकरणे सप्तमीत्याशयेन व्याचष्टे दशम्युत्तरकालमिति । दशम्या उत्तर इति 'पञ्चमीति' योगविभागात् समासः । ततः कालशब्देन बहुव्रीहिः । क्रियाविशेषणमेतत् । दश दिनान्यशौचं भवतीति दशम्युत्तरकालमित्युक्तम् । घोषवदादीनि । घोषवन्तो हयवरलाः वर्गाणां पञ्चमाश्चतुर्थास्तृतीयाश्च वर्णाः । ये एते वर्णाः शिक्षायां प्रदर्शितास्तदादि । अन्तरन्तःस्थम् । मध्ये यरलवा यस्य तदित्यर्थः । अवृद्धं वृद्धसंज्ञकाकाराद्यक्षररहितम् । त्रिपुरुषानूकम् नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्ताननुकायत्यभिधत्त इति त्रिपुरुषानूकम् । 'अन्येषामपि दृश्यते' इति दीर्घः । कृतम् । कृदन्तम् । न तद्धितम् । न

सुदेवो असि—

सुदेवो असि वरुण ! यस्य ते सप्त सिन्धवः ।
अनु क्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥

'सुदेवो असि वरुण' । सत्यदेवोऽसि । 'यस्य ते सप्त सिन्धवः' । सप्त विभक्तयः । 'अनुक्षरन्ति काकुदम्' । काकुदं तालु काकुर्जिह्वा सास्मिन्नुद्यत इति काकुदम् । 'सूर्म्यं सुषिरामिव' । तद्यथा शोभनामूर्मिं सुषिरामग्निरन्तः प्रविश्य दहत्येवं ते सप्त सिन्धवः सप्त विभक्तयस्ताल्वनुक्षरन्ति । तेनासि सत्यदेवः । सत्यदेवाः स्यामेत्यध्येयं व्याकरणम् । [ सुदेवो असि ]

किं पुनरिदं व्याकरणमधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते, न पुनरन्यदपि किंचित् ॐ इत्युक्त्वा वृत्तान्तशः 'शम्' इत्येवमादीन् शब्दान् पठन्ति ।

---

तद्धितप्रत्ययान्तम् । न च । नहि । अन्तरेण विना ।

सुदेव इति ऋङ्मन्त्रः । वरुणस्येयं स्तुतिः । यतो हेतोर्व्याकरणज्ञानाद् वरुण ! सत्यदेवोऽसि ततो हेतोरन्येऽपि सत्यदेवा भवन्तीत्यर्थः । सिन्धवः । नद्य इव विभक्तयः । अनुक्षरन्ति ताल्वनुप्राप्य प्रकाशन्ते । उद्यते उत्क्षिप्यते । अनेकार्था धातवः । सूर्म्यम् । सूर्मीम् इति प्राप्ते 'अमिपूर्वः' इत्यत्र 'वा छन्दसि' इत्यनुवृत्त्या यणादेशः । सूर्मीम् शोभनामयःप्रतिमाम् । सुषिराम् । 'ऊषसुषिमुष्कमधो रः' इति मत्वर्थीयो रप्रत्ययः । 'रन्ध्रं श्वभ्रं वपा सुषिः' इत्यमरः । सुष्ठु स्यति इति सुषिः । सत्यदेवः सत्येनावभासमानः सत्यरूपो वा । वरुणो यथा सत्येन दीव्यति द्योतत इति यौगिकोऽयं शब्दः ।

अस्याशयः—हे वरुण ! सत्यदेवोऽसि यस्य ते काकुदं तालु ( काकुर्जिह्वा सा उद्यते उत्क्षिप्यतेऽस्मिन्निति काकुदम् )। सप्त सिन्धव इव सिन्धवो विभक्तयः तालु प्राप्य प्रकाशन्ते । दृष्टान्तः—यथा सच्छिद्रां लोहमयीं प्रतिमां प्रविश्याग्निः प्रकाशते तथेति । अग्निर्हि तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति तथा विभक्त्योऽपि शारीरं पापमपाकुर्वन्तीत्यर्थः ।

इदं रक्षोहेत्यादिनोक्तम् । अधिजिगांसेति । पिपठिषुभ्यः इत्यर्थः । अन्यदपि व्याकरणातिरिक्तम् । किंचित् । वेदमपि, अधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायत इत्यनुषज्यते । ओमिति । ओंकारमुच्चार्य । शमिति शं नो देवीरित्येवमादीन् वेदान्

पुराकल्प एतदासीत्—संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते । तदद्यत्वे न तथा । वेदमधीत्य त्वरिता वक्तारो भवन्ति—

'वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः ।

अनर्थकं व्याकरणम्' इति। तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद् भूत्वाचार्य इदं शास्त्रमन्वाचष्टे—'इमानि प्रयोजनान्यध्येयं व्याकरणम्' इति ॥

---

पुरा वेदाध्ययनात् पूर्वं व्याकरणमधीयते ते बाल्यात् प्रष्टुमसमर्था इति न प्रयोजनमन्वाख्येयम् । अद्यत्वे तु स्वल्पायुष्ट्वात् पूर्वमेव वेदं प्रधानमधीयते ततः प्रष्टुं समर्थत्वात् व्याकरणाध्ययनस्य प्रयोजनं पृच्छन्तीत्यवश्यान्वाख्येयं प्रयोजनम् ।

पुराकल्पे युगान्तरे । संस्कार उपनयनम् । करण आभ्यन्तरप्रयत्नः । अनुप्रदानं नादादिबाह्यप्रयत्नः । तेनाधीतव्याकरणशिक्षेभ्य इत्यर्थः । ते तदानीमपि कर्मानुष्ठानफलकत्वं वेदस्य जानन्तो नित्यत्वं वा तदध्ययनस्य जानन्तो न तदध्ययनप्रयोजनं पृच्छन्तीति न कदाचिदपि वेदाध्ययनप्रयोजनोपदेश इति तात्पर्यम् । न तथेति । किंतु विपरीतमित्यर्थः । आचार्यपदेन शास्त्राध्यापको भाष्यकृदेव विवक्षितः । इदं शास्त्रम् । प्रयोजनान्वाख्यानम् ।

---

# समुद्रगुप्तप्रशस्तिः

तस्य विविधसमरशतावतरणदक्षस्य स्वभुजबलपराक्रमैकबन्धोः पराक्रमाङ्कस्य परशुशरशङ्कुशक्तिप्रासासितोमरभिन्दिपालनाराचवैतस्तिकाद्यनेकप्रहरणविरूढाकुलव्रणशताङ्कशोभासमुदयोपचितकान्ततरवर्ष्मणः कौसलकमहेन्द्र-माहाकान्तारकव्याघ्रराज-कौराटकमण्टराज-पैष्टपुरकमहेन्द्रगिरि-कौट्टूरकस्वामिदत्तैरण्डपल्लकदमन-काञ्चेयकविष्णुगोपावमुक्तक-नीलराज-वैङ्गेयकहस्तिवर्मपालक्ककोग्रसेन-दैवराष्ट्रककुबेर-कौस्थलपुरकधनंजयप्रभृति-सर्वदक्षिणापथराजग्रहणमोक्षानुग्रहजनितप्रतापोन्मिश्रमाहाभाग्यस्य रुद्रदेव-मतिल-नागदत्त-चन्द्रवर्म-गणपतिनाग-नागसेनाच्युत-नन्दि - बलवर्माद्यनेकार्यावर्तराजप्रसभोद्धरणोद्वृत्तप्रभावमहतः परिचारकीकृतसर्वाटविकराजस्य समतट-डवाक-कामरूप-नेपाल-कर्तृपुरादिप्रत्यन्तनृपतिभिर्मालवार्जुनायन-यौधेय-माद्रकाभीरप्रार्जुन-सनकानीक-काक-खरपरिकादिभिश्च सर्वकरदानाज्ञाकरणप्रणामागमनपरितोषितप्रचण्डशासनस्य अनेकभ्रष्टराज्योत्सन्नराजवंशप्रतिष्ठापनोद्भूतनिखिलभुवनविचरणशान्तयशसः दैवपुत्रषाहि-

---

प्रयागस्था समुद्रगुप्तप्रशस्तिः। गुप्तवंशीयः समुद्रगुप्तः सम्राट् ३३०-३७५ शताब्द्यां राज्यं चकार। तस्य समुद्रगुप्तस्य। समरशतेषु युद्धशतेषु। 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः। परा—'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः। शङ्कुः बाणाग्रम्। प्रासः कुन्तः। भिन्दिपालः अश्मप्रक्षेपसाधनम्। प्रहरणम् अस्त्रम्। व्रणशताङ्कानाम् अरुशतचिह्नानाम्। समु—समुदयेन उपचितं कान्ततरं वर्ष्म शरीरं यस्य सः। कौसलकः कोसलदेशीयः। कोसलदेशः रायपुर-संबलपुर-बिलासपुरप्रदेशः। माहाकान्तारः वन्यराज्यविशेषः। कौराटम् एल्लोरसमीपवर्ति कौल्लेरसरः। कौट्टूर=गंजममण्डलान्तर्गतं महेन्द्रगिरिसमीपवर्ति कोट्टूरनगरम्। पिष्टपुरं=गोदावरीमण्डलान्तर्गतं पिठापुरम्। विष्णुगोपः कश्चित् पल्लववंशीयो राजा। पलक्क=पलक्कड, नेल्लोरमण्डलान्तर्वर्ति। देवराष्ट्रं=येल्लमंचिलिस्थानं विजगापटं नाम्नि मण्डले। कुस्थलपुरं=कुट्टल्लूरनामकं स्थानम्। एरण्डपल्लं—विजगापटं नाम्नि मण्डले प्रदेशविशेषः।—प्रतापेन उन्मिश्रं मिलितं माहाभाग्यं यस्य सः।—राज—राज्ञां

षाहानुषाहिशकमुरुण्डैः सैंहलकादिभिश्च सर्वद्वीपवासिभिरात्मनिवेदन-कन्योपायनदानगरुत्मदङ्कस्वविषयभुक्तिशासनयाचनाद्युपाय-सेवाकृतबाहुवीर्यप्रसरधरणिबन्धस्य पृथिव्यामप्रतिरथस्य सुचरितशतालङ्कृतानेकगुणगणोत्सिक्तिभिश्चरणतलप्रमृष्टान्यनरपतिकीर्तेः साध्वसाधूदयप्रलयहेतुपुरुषस्याचिन्त्यस्य भक्त्यवनतिमात्रग्राह्यमृदुहृदयस्यानुकम्पावतोऽनेकगोशतसहस्रप्रदायिनः कृपणदीनानाथातुरजनोद्धरणमन्त्रदीक्षाभ्युपगतमनसः समिद्धस्य विग्रहवतो लोकानुग्रहस्य धनदवरुणेन्द्रान्तकसमस्य स्वभुजबलविजितानेकनरपतिविभवप्रत्यर्पणानित्यव्यापृतायुक्तपुरुषस्य निशितविदग्धमतिगान्धर्वललितैर्व्रीडितत्रिदशपतिगुरुतुम्बुरुनारदादेर्विद्वज्जनोपजीव्यानेककाव्यक्रियाभिः प्रतिष्ठितकविराजशब्दस्य सुचिरस्तोतव्यानेकाद्भुतोदारचरितस्य लोकसमयक्रियानुविधानमात्रमानुषस्य लोकधाम्नो देवस्य महाराजश्रीगुप्तप्रपौत्रस्य महाराजश्रीघटोत्कचपौत्रस्य महाराजाधिराजश्रीचन्द्रगुप्तपुत्रस्य लिच्छविदौहित्रस्य महादेव्यां कुमारदेव्यामुत्पन्नस्य महाराजाधिराजश्रीसमुद्रगुप्तस्य सर्वपृथिवीविजयजनितोदयव्याप्तनिखिलावनितलां कीर्तिमितस्त्रिदशपतिभवनगमनावाप्तललितसुखविचरणाम् आचक्षाण इव बाहुरयमुच्छ्रितः स्तम्भः ॥

---

प्रसभेन बलात् यदुद्धरणं तेन उद्वृत्तः ऊर्ध्वं नीतः यः प्रभावः तेन महतः। आटविकाः वन्याः। सम—दक्षिणपूर्वीयो बङ्गप्रदेशः। डवाक=आसामप्रान्ते नओगौगमण्डले डबोकनामकं स्थानम्। काम=आसामप्रान्ते गौहाटीप्रदेशः। कर्तृ=कर्तारपुरनामकं स्थानं जलंधरमण्डले। प्रत्यन्तनृपतयः सीमावर्तिनो राजानः। यौधेयाः भरतपुरराज्यस्थविजयगढे निवसन्ति स्म। प्रार्जुनाः अर्थशास्त्रानुसारं मध्यप्रदेशस्थनरसिंहपुरमण्डले निवसन्ति स्म। सनकानीकास्तु पूर्वीयमालवाप्रान्ते। काकाः सांचीप्रदेशे; माद्रकाः सियालकोटमण्डले। षाहि=शाह, षाहानु=शाहंशाह इति। षाहयः कुशानसामन्ताः, षाहानुषाहिस्तेषां सम्राट्। दैव—षाहिः कुशानसम्राट्। शकमुरुण्ड=शकसामन्ताः। गरुत्मदंक=गरुडचिह्नोपेता स्वप्रदेशशासनाय प्रार्थना। प्रसरो विस्तारः। अप्रतिरथस्याप्रतिद्वन्द्विनः। उत्सिक्तिभिः उत्सेकैः, प्राचुर्येणेत्यर्थः। समिद्धस्य दीप्तिमतः। विग्रहवतः शरीरवतः। धनदः कुवेरः। अन्तको यमराजः। आयुक्तो धनाध्यक्षः। त्रिदशपतिगुरुः बृहस्पतिः। तुम्बुरुः कश्चिद् गन्धर्वः। त्रिदशपतिः इन्द्रः।

# दशकुमारचरिते अष्टम उच्छ्वासः

अथ सोऽप्याचचक्षे—"देव, मयापि परिभ्रमता विन्ध्याटव्यां कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन्नक्लेशार्हः क्वचित्कूपाभ्याशेऽष्टवर्षदेशीयो दृष्टः। स च त्रासगद्गदमगदत्—'महाभाग, क्लिष्टस्य मे क्रियतामार्य साहाय्यकम्। अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्तुमुदकमुदञ्चन्निह कूपे कोऽपि निष्कलो ममैकशरणभूतः पतितः। तमलमस्मि नाहमुद्धर्तुम्' इति। अथाहमभ्येत्य व्रतत्या कयापि वृद्धमुत्तार्य, तं च बालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्च पञ्चषैः शरक्षेपोच्छ्रितस्य लकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य, तरुतलनिषण्णस्तं जरन्तमब्रवम्—

---

इदानीं विश्रुतनामा कुमारः स्वचरितं वक्तुमुपक्रमते। अथानन्तर्यार्थे। स विश्रुतनामा। अक्लेशार्हः। खेदार्हो नेत्यर्थः। कूपो जलाशयः। अभ्याशे समीपे। अष्टवर्षदेशीयः। असमाप्ताष्टावर्षः। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति शब्दान्न्यूनार्थे। साहाय्यकं सहायस्य भावस्तथा। पिपासा पातुमिच्छा। प्रतिकर्तुं दूरीकर्तुम्। उदञ्चन्निष्कासयन्। कोऽप्यविदितकुलनामा। निष्कलः स्थविरः। वृद्ध इति यावत्। "निष्कलः स्थविरः समौ" इति वैजयन्ती। अथेति। व्रतत्या वल्ल्या। "वल्ली तु व्रततिर्लता" इत्यमरः, रज्जुस्थानीकृतयेति भावः। वंशनाली वंशदण्डः। पञ्चषैः पञ्च षड् वा। 'संख्ययाव्यय'–इत्यादिना बहुव्रीहिः। 'बहुव्रीहौ संख्येये डजबहुगणात्'। इति समासान्तो डच्? शरक्षेपो बाणगमनम्। ततोऽप्युच्छ्रितस्य। उच्चस्येत्यर्थः। लकुचवृक्षस्य 'लकुचो लिकुचो डहुः' इत्यमरः। भाषायां बडहर इति प्रसिद्धः। प्रत्यानीता परावर्तिता प्राणानां वृत्तिः स्थितिर्यस्य। जरन्तं वृद्धम्। अश्रुभिर्गद्गदं यथा तथा श्रूयतामिति। जनपदो देशः। 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः। अंशेनैकदेशेन। अत्यन्तं सत्त्वं यस्येति। अतिसत्त्वो महाबलः। सत्त्वं सत्त्वगुणो वा। वदान्यो बहुप्रदः। 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः। विनीतो नम्रः। विनेता विनयदाता। रञ्जिता अनुरागं प्रापिता भृत्याः सेवका येनेति। उदग्र उन्नतः। मूर्तिः कायः। बुद्धिर्मतिः। उत्थानशीलः पौरुषस्वभावः। 'उत्थानं पौरुषे' इत्यमरः। शास्त्रमेव प्रमाणं यस्येति स तथा। शक्यभव्यकल्पारम्भी। 'शक्यं तु सुकरं कर्म भव्यं तु जनलालितम्। कल्पं युक्तं न भङ्गेन सदैवैष समाचरेत्' इति दिवाकरः। शक्यं

'तात, क एष बालः, को वा भवान्, कथं चेयमापदापन्ना' इति। सोऽश्रुगद्गदमगदत्—'श्रूयतां महाभाग! विदर्भो नाम जनपदः। तस्मिन्भोजवंशभूषणम्, अंशावतार इव धर्मस्य, अतिसत्त्वः, सत्यवादी, वदान्यो, विनीतो, विनेता प्रजानां, रञ्जितभृत्यः, कीर्तिमान्, उदग्रो, बुद्धिमूर्तिभ्यामुत्थानशीलः, शास्त्रप्रमाणकः, शक्यभव्यकल्पारम्भी, संभावयिता बुधान्, प्रभावयिता सेवकान्, उद्भावयिता बन्धून्, न्यग्भावयिता शत्रून्, असंबद्धप्रलापेष्वदत्तकर्णः, कदाचिदप्यवितृष्णो गुणेषु, अतिनदीष्णः कलासु, नेदिष्ठो धर्मार्थसंहितासु, स्वल्पेऽपि सुकृते सुतरां प्रत्युपकर्ता, प्रत्यवेक्षिता कोशवाहनयोर्, यत्नेन परीक्षिता सर्वाध्यक्षाणाम्, उत्साहयिता कृतकर्मणामनुरूपैर्दानमानैः, सद्यः प्रतिकर्ता दैवमानुषीणामापदां, षाड्गुण्योपयोगनिपुणो, मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य, पुण्यश्लोकः, पुण्यवर्मा नामासीत्। स पुण्यैः कर्मभिः प्राप्य पुरुषायुषं, पुनर-

---

स्वसाध्यम्। भव्यं कुशलम्। 'भावुकं कुशलं क्षेमम्' इत्यमरः। कल्पो विधिः। 'कल्पो न्याय्ये विधौ शास्त्रे संवर्ते ब्रह्मवासरे। कल्पद्रुमे विकल्पे च' इति महीपः। तेषामारम्भस्तच्छीलः। संभावयिता संभावना मानधनादिनेति। एवं सर्वत्र। प्रभावयिता अभ्युदयं प्रापयिता। प्रभुत्वकारयिता। असंबद्धाः परस्परामिलिताः। प्रलापा निरर्थकवचनानि। 'प्रलापोऽनर्थकं वचः' इत्यमरः। तेषु। अवितृष्णो न विगता तृष्णा यस्येति स तथा सर्वदासतृष्ण एवेत्यर्थः। नदीष्णो निपुणः। 'नदीष्णाभिज्ञनिष्णातप्रवीणनिपुणा अपि।' नदीपूर्वात् स्नातेरातोऽनुपसर्गे कप्रत्ययः। 'निनदीभ्यां स्नातेः कौशले' इति मूर्धन्यः। नेदिष्ठो निकटवर्ती। 'अन्तिकबाढयोर्नेदसाधौ' इति साधुः। प्रत्यपेक्षा गवेषणम्। कोशो भाण्डागारम्। वाहनान्यश्वादीनि। प्रतिकर्ता प्रतीकारकर्ता। षाड्गुण्यं षड्गुणाः। चातुर्वर्ण्यादिपाठात्स्वार्थे ष्यञ्प्रत्ययः। 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमंत्रजाः' इत्यमरः। चतुर्वर्णा एव चातुर्वर्ण्यम्। पुण्यश्लोकः पवित्रकीर्तिः। 'पद्ये यशसि च श्लोकः' इत्यमरः। अतिसत्व इत्यादि नयवर्णने कामन्दकः—'न्यायेनार्जनमर्थस्य वर्धनं रक्षणं तथा। सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्'। नयविक्रमसंपन्नः सूत्थानश्चिन्तयेच्छ्रियम्। नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः। शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता। उत्साहो वाग्मिता दार्ढ्यमापत्क्लेशसहिष्णुता॥ प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता। कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः,॥ इति। याज्ञवल्क्योऽपि—'ब्राह्मणेषु क्षमी स्निग्धेष्व-

पुण्येन प्रजानामग्रगण्यतामरेषु। तदनन्तरमनन्तवर्मा नाम तदायतिरवनिमध्यतिष्ठत्। स सर्वगुणैः समृद्धोऽपि दैवाद्दण्डनीत्यां नात्यादृतोऽभूत्। तमेकदा रहसि वसुरक्षितो नाम मन्त्रिवृद्धः, पितुरस्य बहुमतः, प्रगल्भवागभाषत—'तात, सर्वैवात्मसंपदभिजनात्प्रभृत्यन्यूनैवात्र भवति लक्ष्यते। बुद्धिश्च निसर्गपट्वी, कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तारा तवेतरेभ्यः प्रतिविशिष्यते। तथाप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेषु, अनग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः। बुद्धिहीनो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते। न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम्। अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते। न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय। अतिक्रान्तशासनाश्च प्रजा यत्किंचनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः। निर्मर्यादश्च लोको

---

जिह्म क्रोधनो रिपौ। स्याद्राजा भृत्यवर्गे च प्रजासु च यथा पिता' इति। पुण्यवर्मेति नाम राजा। स इति। प्राण्य जीवित्वेत्यर्थः। पुरुषायुषं पूर्णमायुः। 'अचतुर–' इति सूत्रेण निपातितम्। अपुण्येन पापेनेत्यर्थः। अमरेषु देवेषु। तदनन्तरं पुण्यवर्मोत्तरम्। अनन्तवर्मेति। तदायतिस्तस्मात्पुण्यवर्मण आयतिः प्रभावो यस्येति स तथा। 'स्यात्प्रभावेऽपि चायतिः' इत्यमरः। दैवाददृष्टात्। दण्डनीत्यां राजनीत्याम्। प्रगल्भा प्रौढा वाग्यस्येति। तातेति संबोधनम्। आत्मसंपत् पुरुषगुणाः। ते च समनन्तरमेव शास्त्रं प्रज्ञा-इति श्लोकद्वयेन दर्शिताः। अभिजनात्। 'कुलान्यभिजनान्वयौ' इत्यमरः। अतिशयेन पटुः पट्वी। विस्तारो विस्तृतत्वम्। प्रतिविशिष्यते विशिष्टा भवति। तथापीति। अर्थशास्त्रेष्वान्वीक्षिक्यादिषु हेमजातिः सुवर्णजातिः। उच्छ्रितो महान्। परैः शत्रुभिः। अध्यारुह्यमाणमासाद्यमानम्। साध्यं विपक्षभूतम्। साधनं सहायभूतम्। कर्मसु कार्येषु। योगोऽलभ्यलाभः, क्षेमं लब्धसंरक्षणम्। 'अप्राप्तप्रापणं योगः क्षेमं प्राप्तस्य रक्षणम्। द्वयं च साधयेन्नृपः प्रजानां विधिवत्प्रदः'। इति। स्थितीर्मर्यादाः। संकिरेयुः संकीर्णाः कुर्युः। अमुतः परलोकात्। तथा च याज्ञवल्क्यः 'अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः। तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान्'। कामन्दकोऽपि—'अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा। वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते। स्वर्गानन्त्याय धर्मोयं सर्वेषां वर्णिलिङ्गिनाम्। तस्याभावे च लोकोयं संकरान्नाशमाप्नुयात्॥ सर्वस्यास्य यथान्यायं भूपतिः संप्रवर्तकः। तस्याभावे

लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयते । आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा । दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति । तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात् । अतो विहाय बाह्यविद्यास्वभिषङ्गमागमय दण्डनीतिं कुलविद्याम् । तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीम्' इति ।

एतदाकर्ण्य 'स्थान एव गुरुभिरनुशिष्टम् । तथा क्रियते' इत्यन्तःपुरमविशत् । तां च वार्तां पार्थिवेन प्रमदासंनिधौ प्रसङ्गेनोदीरितामुपनिशम्य समीपोपविष्टश्चित्तानुवृत्तिकुशलः प्रसादवित्तो गीतनृत्यवाद्यादिष्वबाह्यो बाह्यनारीपरायणः पटुरयन्त्रितमुखो बहुभङ्गिविशारदः परमर्मान्वेषणपरः परिहासयिता परिवादरुचिः पैशुन्यपण्डितः सचिवमण्डलादप्युत्कोचहारी सकलदुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम स्मितपूर्वं व्यज्ञपयत्—'देव, दैवानुग्रहेण यदि कश्चिद्भाजनं भवति विभूतेस्तमकस्मादुच्चावचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्ताः । तथा हि । केचित्प्रेत्य किल लभ्यैरभ्युदयातिशयैराशामुत्पाद्य, मुण्डयित्वा शिरो, बद्ध्वा दर्भरज्जुभिर्, अजिनेनाच्छाद्य, नवनीतेनोपलिप्य, अनशनं च शाययित्वा, सर्वस्वं स्वीकरिष्यन्ति । तेभ्योऽपि घोरतराः पाषण्डिनः पुत्रदारशरीरजीवितान्यपि मोचयन्ति । यदि

---

धर्मनाशस्तदभावे जगच्च्युतिः' ॥ इति । चाणक्योऽपि—'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजा' ॥ इति वैजयन्ती ॥ आगमः शास्त्रम् । बाह्यविद्यास्वितरविद्यासु । अभिषङ्गं सङ्गम् । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति वैजयन्ती । तदर्थानुष्ठानेन कुलविद्यानुष्ठानेन । आवर्जिता प्राप्ता । शक्तीनां प्रभावोत्साहमन्त्रजानां सिद्धिर्येन । शासनम् आज्ञा । एतदिति । स्थाने युक्तमित्यर्थः । अनुशिष्टमुपदिष्टम् । चित्तानुवृत्तिर्मनोगतं तत्र कुशलः । प्रसादवित्तो प्रसादेन ख्यातः । 'वित्तविज्ञातविश्रुताः' इत्यमरः । वाद्यं चतुर्विधम् । अयन्त्रितमुखो बहुभाषी । परमर्म परगोप्यम् । उत्कोच उपदा । कुमारसेवकः कौमार्यात् प्रभृति सेवकः । उच्चावचैः विविधैः । प्रेत्य जन्मान्तरे । अजिनेन चर्मणा । अनशनम्-भोजनरहितम् । पाषण्डिनो दुःशास्त्रवर्तिनः । सर्वतोपभ्रष्टाः नानावेषधराः । पटुजातीयः प्रगल्भः । प्रकारवचने जातीयर् । काकिणी विंशद्वराटका । वराटकानां-

कश्चित्पटुजातीयो नास्यै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत्, तमन्ये परिवार्याहुः—'एकामपि काकिणीं कार्षापणलक्षमापादयेम, शस्त्राहते सर्वशत्रून्घातयेम, एकशरीरिणमपि मर्त्यं चक्रवर्तिनं विदधीमहि, यद्यस्मदुद्दिष्टेन मार्गेणाचर्यते' इति। स पुनरिमान्प्रत्याह—'कोऽसौ मार्गः' इति। पुनरिमे ब्रुवते—"ननु चतस्रो राजविद्यास्त्रयी वार्तान्वीक्षिकी दण्डनीतिरिति। तासु तिस्रस्त्रयीवार्तान्वीक्षिक्यो महत्यो मन्दफलाश्च, तास्तावदासताम्। अधीष्व तावद्दण्डनीतिम्। इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता। सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा' इति। स 'तथा' इत्यधीते। शृणोति च। तत्रैव जरां गच्छति। तच्च किल शास्त्रं शास्त्रान्तरानुबन्धि। सर्वमेव वाङ्मयमविदित्वा न तत्त्वतोऽधिगंस्यते। भवतु कालेन बहुनाल्पेन वा तदर्थाधिगतिः। अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम्। आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः संपद्यते। इयत ओदनस्य पाकायैतावदिन्धनं पर्याप्तमिति मानोन्मानपूर्वकं देयम्। उत्थितेन च राज्ञा क्षालिताक्षालिते मुखे, मुष्टिमर्धमुष्टिं वाभ्यन्तरीकृत्य कृत्स्नमायव्ययजातमह्नः प्रथमेऽष्टमे भागे श्रोतव्यम्। शृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्ताश्चत्वारिंशतं चाणक्योपदिष्टानाहरणोपायान्सहस्रधात्मबुद्ध्यैव ते विकल्पयितारः। द्वितीयेऽन्योन्यं विवदमानानां प्रजानामाक्रोशाद्दह्यमानकर्णः कष्टं जीवति। तत्रापि प्राड्विवाकादयः स्वेच्छया जयपराजयौ विदधानाः पापेनाकीर्त्या च भर्तारमात्मनश्चार्थैर्योजयन्ति। तृतीये स्नातुं भोक्तुं च लभते। भुक्तस्य यावदन्धःपरिणामस्तावदस्य विषभयं न शाम्यत्येव। चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति। पञ्चमे मन्त्रचिन्तया महान्तमायासमनुभवति। तत्रापि मन्त्रिणो मध्यस्था

---

दशकद्वयं यत्सा काकिणी इति भास्कराचार्यः। कार्षापणम्। 'कार्षापणः कार्षिके स्यात्पणषोडशकेऽपि च' इति विश्वः। एकशरीरिणम् एकाकिनम्। मर्त्यं चक्रवर्तिनं मनुष्यसमूहवर्तिनम्। मौर्यो राजा। वाङ्मयं शब्दशास्त्रम्। मुष्ट्यर्धमुष्टी परिमाणविशेषः। प्राड्विवाकाः सभ्याः। अन्धःपरिणाम ओदनपरिपाकः। संभूय मिलित्वा। चारा गूढदूताः। स्वपरमित्राणां मण्डलम्। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यते।

इवान्योन्यं मिथः संभूय, दोषगुणौ, दूतचारवाक्यानि, शक्याशक्यतां, देशकालकार्यावस्थाश्च, स्वेच्छया विपरिवर्तयन्तः स्वपरमित्रमण्डलान्युपजीवन्ति। बाह्याभ्यन्तरांश्च कोपान्गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगृह्णन्ति । षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः। सोऽस्यैतावान्स्वैरविहारकालो यस्य तिस्रस्त्रिपादोत्तरा नाडिकाः । सप्तमे चतुरङ्गबलप्रत्यवेक्षणप्रयासः। अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः । पुनरुपास्यैव संध्यां, प्रथमे रात्रिभागे गूढपुरुषा द्रष्टव्याः। तन्मुखेन चातिनृशंसाः शस्त्राग्निरसप्रणिधयोऽनुष्ठेयाः । द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभते । तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत किल । कथमिवास्याजस्रचिन्तायासविह्वलमनसो वराकस्य निद्रासुखमुपनमेत। पुनः षष्ठे शास्त्रचिन्ताकार्यचिन्तारम्भः। सप्तमे तु मन्त्रग्रहो दूताभिप्रेषणानि च । दूताश्च नामोभयत्र प्रियाख्यानलब्धानर्थान्वीतशुल्कबाधवर्त्मनि वाणिज्यया वर्धयन्तः, कार्यमविद्यमानमपि लेशेनोत्पाद्यानवरतं भ्रमन्ति। अष्टमे पुरोहितादयोऽभ्येत्यैनमाहुः—'अद्य दृष्टो दुःस्वप्नः। दुःस्था ग्रहाः । शकुनानि चाशुभानि । शान्तयः क्रियन्ताम्। सर्वमस्तु सौवर्णमेव होमसाधनम्। एवं सति कर्म गुणवद्भवति। ब्रह्मकल्पा इमे ब्राह्मणाः। कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति। ते चामी कष्टदारिद्र्या बह्वपत्या यज्वानो वीर्यवन्तश्चाद्याप्यप्राप्तप्रतिग्रहाः । दत्तं चैभ्यः स्वर्ग्यमायुष्यमरिष्टनाशनं च भवति'। इति बहुबहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति । तदेवमहर्निशमविहितसुखलेशमायासबहुलमविरलकदर्थनं च नयतो नयज्ञस्यास्तां चक्रवर्तिता स्वमण्डलमात्रमपि दुरारक्ष्यं भवेत् । शास्त्रज्ञसमाज्ञातो हि यद्ददाति, यन्मानयति, यत्प्रियं

---

स्वमण्डलं परमण्डलं मित्रमण्डलं वेति व्याख्या। शस्त्रप्रणिधिः शस्त्रमारकः। अग्निप्रणिधिरग्निदायकः। रसप्रणिधिर्विषदायकः। संवेशः शयनम्। 'संवेशः शयने स्थाने सतसमारोहणेपि च' इत्यजयः। शास्त्रचिन्ता कार्यचिन्ता चेति। वीता शुल्कबाधा यत्रेति क्रियाविशेषणम्। वणिज्यया वणिक्कर्मणा। गुणवत्सार्थकम्। ब्रह्मकल्पा ब्रह्मणईषन्न्यूनाः। स्वस्त्ययनं क्षेमप्रापणम्। कष्टं क्लेशकरं दारिद्र्यं येषाम्। स्वर्ग्यं स्वर्ग-

ब्रवीति, तत्सर्वमतिसंधातुमित्यविश्वासः । अविश्वास्यता हि जन्मभूमिरलक्ष्म्याः। यावता च नयेन विना न लोकयात्रा स लोक एव सिद्धः। नात्र शास्त्रेणार्थः। स्तनंधयोऽपि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते । तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि । येऽप्युपदिशन्ति 'एवमिन्द्रियाणि जेतव्यानि, एवमरिषड्वर्गस्त्याज्यः, सामादिरुपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः, संधिविग्रहचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखस्यावकाशो न देयः' इति, तैरप्येभिर्मन्त्रिवकैर्युष्मत्तश्चौर्यार्जितं धनं दासीगृहेष्वेव भुज्यते । के चैते वराकाः । येऽपि मन्त्रकर्कशास्तन्त्रकर्तारः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैः किमरिषड्वर्गो जितः, कृतं वा तैः शास्त्रानुष्ठानम्। तैरपि हि प्रारब्धेषु कार्येषु दृष्टे सिद्ध्यसिद्धी । पठन्तश्चापठद्भिरतिसंधीयमाना बहवः। नन्विदमुपपन्नं देवस्य, यदुत सर्वलोकस्य वन्द्या जातिर्, अयातयामं वयो, दर्शनीयं वपुर्, अपरिमाणा विभूतिः । तत्सर्वं सर्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात्सर्वकार्येष्वमुक्तसंशयेन तन्त्रावापेन मा कृथा वृथा। सन्ति हि ते दन्तिनां दश सहस्राणि, हयानां लक्षत्रयम्, अनन्तं च पादातम्। अपि च पूर्णान्येव हेमरत्नैः कोशगृहाणि सर्वश्चैष जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यति । किमिदमपर्याप्तं यदन्यार्जितायायासः क्रियते। जीवितं हि नाम जन्मवतां चतुःपञ्चाण्यहानि। तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम् । अपण्डिताः पुनरर्जयन्त एव ध्वंसन्ते । नार्जितस्य वस्तुनो लवमप्यास्वादयितुमीहन्ते । किं बहुना राज्यभारं भारक्षमेष्वन्तरङ्गेषु भक्तिमत्सु समर्प्य, अप्सरः-

---

साधनमायुष्यमायुर्वृद्धिकरमरिष्टनाशनमशुभवारकम् । उपांश्वेकान्ते । अवि—बहुक्लेशम्। अतिसंधातुं वञ्चयितुम्। स्तनंधयः शिशुः । अरिषड्वर्गः कामक्रोधलोभमदमोहमात्सर्याणि । सामादिः । सामदाने भेददण्डावित्युपायचतुष्टयम् इत्यमरः । मंत्रिवकैर्मन्त्रिकुत्सितैः । मंत्रकर्कशा मंत्रैः कठिनाः। शास्त्र—शास्त्रकाराः तन्त्रकाराश्च । यातः यामः उपभोगकालो यस्य तद्यातयामम्। तद्भावः । नवमित्यर्थः । अपरिमाणा अपरिमिता । तंत्रावापेन । 'तन्त्रं स्वराष्ट्रचिन्ता स्यादावापस्त्वरिचिन्तनम्' इति ।

प्रतिरूपाभिरन्तःपुरिकाभी रममाणो गीतसंगीतपानगोष्ठीश्च यथर्तु बध्नन्यथार्हं कुरु शरीरलाभम्' इति पञ्चाङ्गीस्पृष्टभूमिरञ्जलिचुम्बितचूडश्चिरमशेत प्राहसीच्च प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः। जननाथश्च सस्मितम् 'उत्तिष्ठ, ननु हितोपदेशाद्गुरवो भवन्तः। किमिति गुरुत्वविपरीतमनुष्ठितम्' इति तमुत्थाप्य क्रीडानिर्भरमतिष्ठत्। अथैषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे प्रेर्यमाणो मन्त्रिवृद्धेन, वचसाभ्युपेत्य मनसैवाचित्तज्ञ इत्यवज्ञातवान्। अथैवं मन्त्रिणो मनस्यभूत्—'अहो मे मोहाद्बालिश्यम्। अरुचितेऽर्थे चोदयन्नर्थीवाक्षिगतोऽहमस्य हास्यो जातः। स्पष्टमस्य चेष्टानामायथापूर्व्यम् तथा हि। न मां स्निग्धं पश्यति, न स्मितपूर्वं भाषते, न रहस्यानि विवृणोति, न हस्ते स्पृशति, न व्यसनेष्वनुकम्पते, नोत्सवेष्वनुगृह्णाति, न विलोभनवस्तु प्रेषयति, न मत्सुकृतानि प्रगणयति, न मे गृहवार्तां पृच्छति, न मत्पक्षान्प्रत्यवेक्षते, न मामासन्नकार्येष्वभ्यन्तरीकरोति, न मामन्तःपुरं प्रवेशयति। अपि च मामनर्हेषु कर्मसु नियुङ्क्ते, मदासनमन्यैरवष्टभ्यमानमनुजानाति, मद्वैरिषु विश्रम्भं दर्शयति, मदुक्तस्योत्तरं न ददाति, मत्समानदोषान्विगर्हति, मर्मणि मामुपहसति, स्वमतमपि मया वर्ण्यमानं प्रतिक्षिपति, महार्हाणि वस्तूनि मत्प्रहितानि नाभिनन्दति, नयज्ञानां स्खलितानि मत्समक्षं मूर्खैरुद्घोषयति। सत्यमाह चाणक्यः—'चित्तज्ञानानुवर्तिनोऽनर्था अपि प्रियाः स्युः। दक्षिणा अपि तद्भावबहिष्कृता द्वेष्या भवेयुः' इति। तथापि का गतिः। अविनीतोऽपि न परित्याज्यः पितृपैतामहैरस्मादृशैरय-

---

नीतिविमर्शो वा। पदातीनां समूहः पादातम्। 'भिक्षादिभ्योऽण्' इति अण्। कोशगृहाणि भाण्डागाराणि। कोष्ठागाराणि धान्यसंग्रहगृहाणि। 'पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा' इति कोशः। रेचयिष्यति रिक्तीकरिष्यति। अन्यार्जितं परैः संचितम्। अपण्डिता मूढाः। अन्तःपुरिकाभिः स्त्रीभिः। यथार्हं यथाशक्ति। पञ्चाङ्गी पञ्चानामङ्गानां समाहारस्तथा। 'द्विगोः' इति ङीप्। 'जानूबाहुद्वयं मूर्धा पञ्चाङ्गम्' इत्युत्पलिनी। चुम्बितः स्पृष्टः। चूडो मौलिः। प्रमदाः स्त्रियः। प्रस्तुतेऽर्थे प्रकृते कार्ये। बालिश्यं मूर्खता। अक्षिगतो द्वेष्यः विलोभनवस्तूनि स्पृहणीयवस्तूनि। अनर्हेषु अयोग्येषु। अवष्टभ्यमानमाक्रम्यमाणम्। विश्रम्भं विश्वासम्। प्रतिक्षिपति निराकरोति। महार्हाणि

मधिपतिः। अपरित्यजन्तोऽपि कमुपकारमश्रूयमाणवाचः कुर्मः। सर्वथा नयज्ञस्य वसन्तभानोरश्मकेन्द्रस्य हस्ते राज्यमिदं पतितम्। अपि नामापदो भाविन्यः प्रकृतिस्थमेनमापादयेयुः। अनर्थेषु सुलभव्यलीकेषु क्वचिदुत्पन्नोऽपि द्वेषः, सद्वृत्तमस्मै न रोचयेत्। भवतु भविता तावदनर्थः। स्तम्भितपिशुनजिह्वो यथाकथंचिद-भ्रष्टपदस्तिष्ठेयम्' इति। एवंगते मन्त्रिणि, राजनि च कामवृत्ते, चन्द्रपालितो नामाश्मकेन्द्रामात्यस्येन्द्रपालितस्य सूनुः, असद्वृत्तः पितृनिर्वासितो नाम भूत्वा, बहुभिश्चारणगणैर्बह्वीभिरनल्पकौश-लाभिः शिल्पकारिणीभिरनेकच्छन्नकिंकरैश्च गूढपुरुषैः परिवृतो-ऽभ्येत्य विविधाभिः क्रीडाभिर्विहारभद्रमात्मसादकरोत्। अमुना चैव संक्रमेण राजन्यास्पदमलभत। लब्धरन्ध्रश्च स यद्यद्व्यसन-मारभते तत्तथेत्यवर्णयत्—'देव, यथा मृगया ह्यौपकारिकी न तथान्यत्। अत्र हि व्यायामोत्कर्षादापत्सूपकर्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः, कफापचयादारोग्यैकमूलमाशयाग्निदीप्तिर्, मेदोप-कर्षादङ्गानां स्थैर्यकार्कश्यातिलाघवादीनि, शीतोष्णवातवर्ष-क्षुत्पिपासासहत्वं सत्त्वानामवस्थान्तरेषु चित्तचेष्टितज्ञानं हरिण-गवलगवयादिवधेन सस्यलोपप्रतिक्रिया, वृकव्याघ्रादिघातेन स्थलपथशल्यशोधनं, शैलाटवीप्रदेशानां विविधकर्मक्षमाणामालो-चनम्, आटविकवर्गविश्रम्भणम्, उत्साहशक्तिसंधुक्षणेन प्रत्यनीक-वित्रासनमिति बहुतमा गुणाः। द्यूतेऽपि द्रव्यराशेस्तृणवत्त्यागाद-नुपमानमाशयौदार्यं, जयपराजयानवस्थानाद्धर्षविषादयोरविधेयत्वं,

---

महामूल्यानि। नयज्ञो नीतिवित्। चित्तज्ञानमनुवर्त्तन्ते ते तथा। दक्षिणाः सरला अपि। तस्य चित्तस्य भावस्तद्बहिष्कृताः। अविनीत उद्दण्डः। कमुपकारं प्रयोजनादिकम्। प्रकृतिः स्वभावः। सुलभव्यलीकेषु सुलभक्लेशेषु। 'पीडार्थेऽपि व्यलीकं स्यात्' इत्यमरः। स्तम्भिता पिशुनानां जिह्वा येन सः। पिशुनः कर्णेजपः। अभ्रष्टपदोऽच्युताधिकारः। चारणगणैर्गायकसमूहैः। 'चारणो गायकः समौ' इति वैजयन्ती। आस्पदं प्रतिष्ठाम्। व्यसनम्। 'यस्माद्धि व्यस्यति श्रेयस्ततो व्यसनमुच्यते' इति कामन्दकः। स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यार्थदूषणम्। दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम् इति वैजयन्ती। मृगया आखेटः। अग्रेऽपि द्रष्टव्यमिति औपकारिक्युपकारकर्त्री। अध्वा मार्गः। जवो वेगः। कफः श्लेष्मा। अपचयो हानिः। मेदो धातुः। आमाशयाग्निः जठराग्निः।

पौरुषैकनिमित्तस्यामर्षस्य वृद्धिर्, अक्षहस्तभूम्यादिगोचराणामत्यन्तदुरुपलक्ष्याणां कूटकर्मणामुपलक्षणादनन्तबुद्धिनैपुण्यम्, एकविषयोपसंहाराच्चित्तस्यातिचित्रमैकाग्र्यम्, अध्यवसायसहचरेषु साहसेष्वतिरतिर्, अतिकर्कशपुरुषप्रतिसंसर्गादनन्यधर्षणीयता, मानावधारणम्, अकृपणं च शरीरवापनमिति। उत्तमाङ्गनोपभोगेऽप्यर्थधर्मयोः सफलीकरणं, पुष्कलः पुरुषाभिमानो, भावज्ञानकौशलम्, अलोभक्लिष्टमाचेष्टितम्, अखिलासु कलासु वैचक्षण्यम्, अलब्धोपलब्धिलब्धानुरक्षणरक्षितोपभोगभुक्तानुसंधानरुष्टानुनयादिष्वजस्रमभ्युपायरचनया बुद्धिवाचोः पाटवम्, उत्कृष्टशरीरसंस्कारात्सुभगवेषतया लोकसंभावनीयता, परं सुहृत्प्रियत्वं, गरीयसी परिजनव्यपेक्षा, स्मितपूर्वाभिभाषित्वम्, उद्रिक्तसत्त्वता, दाक्षिण्यानुवर्तनम्, अपत्योत्पादनेनोभयलोकश्रेयस्करत्वमिति। पानेऽपि नानाविधरागभङ्गपटीयसामासवानामासेवनात्स्पृहणीयवयोव्यवस्थापनम्, अहंकारप्रकर्षादशेषदुःखतिरस्करणम्, अङ्गजरागदीपनादङ्गनोपभोगशक्तिसंधुक्षणम्, अपराधप्रमार्जनान्मनःशल्योन्मार्जनम्, अश्राव्यशंसिभिरनर्गलप्रलापैर्विश्वासोपबृंहणम्, मत्सरानुबन्धादानन्दैकतानता, शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः, संविभागशीलतया सुहृद्वर्गसंवर्गणम्, अनुपमानमङ्गलावण्यम्, अनुत्तराणि विलसितानि, भयार्तिहरणाच्च सांग्रामिकत्वमिति। वाक्पारुष्यं दण्डो दारुणो दूषणानि चार्थानामेव यथावकाशमौपकारिकाणि। न हि मुनिरिव नरपतिरुपशमरतिरभिभवितुमरिकुलमलम्, अवलम्बितुं च लोक-

---

अनीकं सैन्यम्। वित्रासनं प्रधर्षणम्। आशयौदार्यं चित्तौदार्यम्। कूटकर्मणाम् कपटकर्मणाम्। अमर्षः क्रोधः। उपलक्षणं ज्ञानम्। अक्षो देवनः। उपसंहारः एकत्रीभावः। अध्यवसायः उत्साहः। प्रतिसंसर्गः प्रत्यवस्थानम्। धर्षणीयताभिभवनीयत्वम्। अवधारणं निश्चयः। अङ्गना रमणी। पुष्कलः प्रचुरः। भावश्चित्ताभिप्रायः। अलब्धोपलब्धिरप्राप्तप्राप्तिः, योग इति यावत्। लब्धानुरक्षणं प्राप्तस्य पालनं क्षेमम्। भुक्तानुसन्धानम् भुक्तस्मृतिः। रुष्टस्यानुनयः क्रुद्धस्य समाधानम्। पाटवं कौशलम्। उत्कृष्टः उत्तमः। सुभगं मनोज्ञम्। उद्रिक्ता प्रचुरशक्तिता। पटीयसां पटुतराणाम्। आसवानां मद्यानाम्। अङ्गजो मदनः। राग इच्छा। दीपनं वृद्धिः।

तन्त्रम्' इति । असावपि गुरूपदेशमिवात्यादरेण तस्य मतमन्ववर्तत । तच्छीलानुसारिण्यश्च प्रकृतयो विश्रृङ्खलमसेवन्त व्यसनानि । सर्वश्च समानदोषतया न कस्यचिच्छिद्रान्वेषणायायतिष्ट । समानभर्तृप्रकृतयस्तन्त्राध्यक्षाः स्वानि कर्मफलान्यभक्षयन् । ततः क्रमादायद्वाराणि व्यशीर्यन्त । व्ययमुखानि विटवैधेयतया विभोरहरहर्व्यवर्धन्त । सामन्तपौरजानपदमुख्याश्च समानशीलतयोपारूढविश्रम्भेण राज्ञा सजायाः पानगोष्ठीष्वभ्यन्तरीकृताः स्वं स्वमाचारमत्यचारिषुः । तदङ्गनासु चानेकापदेशपूर्वमपाचरन्नरेन्द्रः । तदन्तःपुरेषु चामी भिन्नवृत्तेषु मन्दत्रासा बहुसुखैरवर्तन्त । सर्वश्च कुलाङ्गनाजनः सुलभभङ्गिभाषणरतो भग्नचारित्रयन्त्रणस्तृणायापि न गणयित्वा भर्तॄन्धातृगणमन्त्रणान्यश्रृणोत् । तन्मूलाश्च कलहाः सामर्षाणामुदभवन् । अहन्यन्त दुर्बला बलिभिः । अपहृतानि धनवतां धनानि तस्करादिभिः । अपहृतपरिभूतयः प्रहताश्च पातकपथाः । हतबान्धवा हृतवित्ता वधबन्धातुराश्च मुक्तकण्ठमाक्रोशन्नश्रुकण्ठ्यः प्रजाः दण्डश्चायथाप्रणीतो भयक्रोधावजनयत् । कृशकुटुम्बेषु लोभः पदमधत्त । विमानिताश्च तेजस्विनो मानेनादह्यन्त । तेषु तेषु चाकृत्येषु प्रासरन्परोपजापाः । तदा च मृगयुवेषमृगबाहुल्यवर्णनेनाद्रिद्रोणीरनपसारमार्गाः

---

अङ्गनाः स्त्रियः । संधुक्षणमुद्द्योतनम् । शल्यो—पीडाव्यपनयः । अनर्गल—उच्छृङ्खलभाषितैः । एकतानता एकाग्रता । सातत्येन नैरन्तर्येण । संवर्गणम् एकत्रीकरणम् । अनु—अनुपमितम् । संग्रामे साधु सांग्रामिकम् । औपकारिकाण्युपकारक्षमाणि । उपशमः शान्तिः । लोकतंत्रं प्रजाशासनाधिकारम् । प्रकृतयः प्रजाः । छिद्रान्वेषणाय । दोषगवेषणाय । तंत्राध्यक्षाः सेनापतयः । कर्मफलानि तत्तत्कर्मणि लब्धानि राजद्रव्याणि । आयद्वाराणि लाभोपायाः । व्यशीर्यन्त शीर्णानि । व्ययमुखानि व्ययद्वाराणि । विटस्य षिङ्गस्य । विधेयतया विनयग्राहितया । 'विधेयो विनयग्राही' इत्यमरः । विभोः राज्ञः । सजायाः सपत्नीकाः । अपदेशो व्याजः । पानगोष्ठी मद्यशाला । मन्दत्रासाः निर्भया इत्यर्थः । भङ्गिभाषणं वक्रोक्तयः । धातॄणां गणाः जारसमूहाः । सामर्षाणां सक्रोधानाम् । तत्करोतीति तस्करः चौरः । अप—निरस्तपरिभवाः । वध—मरणकारागारव्याकुलाः । विमानिताः परिभूताः । परोपजापाः शत्रुप्रयुक्ता भेदाः । अद्रिद्रोणी पर्वतघाटी । अनपसारमार्गा

शुष्कतृणवंशगुल्माः प्रवेश्य द्वारतोऽग्निविसर्गैर्, व्याघ्रादिवधे प्रोत्साह्य तन्मुखपातनैर् इष्टकूपतृष्णोत्पादनेनातिदूरहारितानां प्राणहारिभिः क्षुत्पिपासाभिवर्धनैस्, तृणगुल्मगूढच्छन्नतटप्रदरपातहेतुभिर्विषममार्गप्रधावनैर्, विषमुखीभिः क्षुरिकाभिश्चरणकण्टकोद्धरणैर्, विष्वग्विसरविच्छिन्नानुयातृतयैकाकीकृतानां यथेष्टघातनैर्, मृगदेहापराद्धैर्नामेषुमोक्षणैः, सपणबन्धमधिरुह्याद्रिशृङ्गाणि दुरधिरोहाण्यनन्यलक्ष्यैः प्रभ्रंशनैर्, आटविकच्छद्मना विपिनेषु विरलसैनिकानां प्रतिरोधनैर्, अक्षद्यूतपक्षियुद्धयात्रोत्सवादिसंकुलेषु बलवदनुप्रवेशनैर्, इतरेषां हिंसोत्पादनैर्, गूढोत्पादितव्यलीकेभ्योऽप्रियाणि प्रकाशं लब्ध्वा साक्षिषु तद्विख्याप्याकीर्तिगुप्तिहेतुभिः पराक्रमैः, परकलत्रेषु सुहृत्त्वेनाभियोज्य जारान्भर्तृनुभयं वा प्रहृत्य तत्साहसोपन्यासैर्, योग्यनारीहारितानां संकेतेषु प्रागुपनिलीय पश्चादभिद्रुत्याकीर्तनीयैः प्रमापणैर्, उपप्रलोभ्य बिलप्रवेशेषु निधानखननेषु मन्त्रसाधनेषु च विघ्नव्याजसाध्यैर्व्यापादनैर्, मत्तगजाधिरोहणाय प्रेर्य प्रत्यपायनिवर्तनैर्, व्यालहस्तिनं कोपयित्वा लक्ष्यीकृतमुख्यमण्डलेष्वक्रमपणैर्, दायाद्यर्थे विवदमानानुपांशु हत्वा प्रतिपक्षेष्वयशःपातनैः, सामन्तपुरजनपदेष्वयथावृत्तानप्रकाशमभिप्रहृत्य तद्वैरिनामघोषणैर्, योग्याङ्गनाभिरहर्निशमभिरमय्य राजयक्ष्मोत्पादनैर्, वस्त्राभरणमाल्याङ्गरागादिषु रसविधानकौशलैश्, चिकित्सामुखे-

---

अनिर्गमनमार्गाः । वंशगुल्मा वेणुगहनानि । अग्निविसर्गैरग्निदानैः । प्रोत्साह्य प्रेर्य । इष्टकूपः मधुरजलः कूपः । तट उन्नतप्रदेशे । प्रदरो निम्नगो भागः । विषममार्गः कठिनमार्गः । क्षुरिकाः शस्त्रिकाः । विष्वक् सर्वतो यो विसरः प्रचारस्तेन विछिन्ना अनुयातारो येषा तेषां भावस्तत्ता तया । अनुयातानुगामी । अपराद्धः लक्ष्यच्युतः । इषुमोक्षणैर्बाणपातनैः । सपणबन्धं सनियमम् । अटवीमटन्ति त आटविकाः तेषां व्याजेन । संकुलं समुदायः । व्यलीकं पीडा । विख्याप्य प्रकटय्य । अभियोज्य योजयित्वा । योगनारी जारिणी । 'योगो विस्रब्धघाती स्यात्' इति कोषः । प्राक्प्रथमम् । उपनिलीय लीनतां प्रापय्य । प्रमापणैर्हिंसनैः । प्रेर्य प्रोत्साह्य । प्रत्यपायानां नाशप्रतिबन्धकानामुपायानाम् । निवर्तनैर्हिंसोत्पादनैरित्यर्थः । प्रत्यवायनिर्वर्तनैरिति पाठे प्रत्यवायो नाशस्तत्संपादनैः । व्यालं दुष्टम् । व्यालो दुष्टगजः प्रोक्त' इति हलायुधः । अपक्रमणैर्मोचनैः । 'पणो वराटमाने स्यान्मूल्ये कार्षा-

नामयोपबर्हणैरन्यैश्चाभ्युपायैरश्मकेन्द्रप्रयुक्तास्तीक्ष्णरसदादयः प्रक्षपितप्रवीरमनन्तवर्मकटकं जर्जरमकुर्वन्।

अथ वसन्तभानुर्भानुवर्माणं नाम वानवास्यं प्रोत्साह्यानन्तवर्मणा व्यग्राहयत्। तत्परामृष्टराष्ट्रपर्यन्तश्चानन्तवर्मा तमभियोक्तुं बलसमुत्थानमकरोत्। सर्वसामन्तेभ्यश्चाश्मकेन्द्रः प्रागुपेत्यास्य प्रियतरोऽभूत्। अपरेऽपि सामन्ताः समगंसत। गत्वा चाभ्यर्णे नर्मदारोधसि न्यविशन्। तस्मिंश्चावसरे महासामन्तस्य कुन्तलपतेरवन्तिदेवस्यात्मनाटकीयां क्ष्मातलोर्वशीं नाम चन्द्रपालितादिभिरतिप्रशस्तनृत्यकौशलामाहूयानन्तवर्मा नृत्यमद्राक्षीत्। अतिरिक्तश्च भुक्तवानिमां मधुमत्ताम्। अश्मकेन्द्रस्तु कुन्तलपतिमेकान्ते समभ्यधत्त—'प्रमत्त एष राजा कलत्राणि नः परामृशति। कियत्यवज्ञा सोढव्या। मम शतमस्ति हस्तिनां, पञ्चशतानि च ते। तदावां संभूय मुरलेशं वीरसेनमृचीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं सासिक्यनाथं च नागपालमुपजपाव। ते चावश्यमस्याविनयमहसमाना अस्मन्मतेनैवोपावर्तेरन्। अयं च वानवास्यः प्रियं मे मित्रम्। अमुनैनं दुर्विनीतमग्रतो व्यतिषक्तं पृष्ठतः प्रहरेम। कोशवाहनं च विभज्य गृह्णीमः' इति। हृष्टेन चामुनाभ्युपेते, विंशतिं वरांशुकानां, पञ्चविंशतिं काञ्चनकुङ्कुमकम्बलानां, प्राभृतीकृत्याप्तमुखेन तैः सामन्तैः संमन्त्र्य तानपि स्वमतावस्थापयत्। उत्तरेद्युस्तेषां सामन्तानां वानवास्यस्य चानन्तवर्मा नयद्वेषादामिषत्वमगमत्। वसन्तभानुश्च तत्कोशवाहनमवशीर्णमात्माधिष्ठितमेव कृत्वा

---

पणे ग्लहे' इति विश्वः। उपांशु रहसि। घोषणैर्डिण्डिमैः। योगाङ्गनाः जारिण्यः। 'रसाधानं विषाधानं तीक्ष्णा मर्मणि घातकाः'। आमयो रोगः। उपबर्हणं वर्धनम्। अथेति। वानवास्यं वनप्रभुम्। प्रोत्साह्य प्रेर्य। व्यग्राहयत् विग्रहमकारयत्। तेन परामृष्टोऽभिद्रुतो राष्ट्रपर्यन्तो राष्ट्रप्रान्तभागो यस्य। अभियोक्तुं पराभवितुम्। अभिग्रहीतुम्। समगंसत। गम्लृ गतौ। समुपसर्गः। लुङ्। 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम्। अभ्यर्णे समीपे। आत्मनाटकीयां स्वकीयनृत्याङ्गनाम्। क्ष्मा पृथ्वी। मधुमत्तां मदिरामत्ताम्। संभूय मिलित्वा। उपजापः संहतयोर्भेदनम्। व्यतिषक्तं युद्धव्यापृतम्। वरांशुकानि बहुमूल्यवस्त्राणि। प्राभृतीकृत्योपायनीकृत्य, दत्त्वा। आप्ताः विश्वस्ताः। नयो नीतिः। अवशीर्णं नष्टम्। आमिषत्वमगमत् पंचत्वं

'यथाप्रयासं यथाबलं च विभज्य गृह्णीत । युष्मदनुज्ञया येनकेनचिदंशेनाहं तुष्यामि' इति शाठ्यात्सर्वानुवर्ती, तेनैवामिषेण निमित्तीकृतेनोत्पादितकलहः सर्वसामन्तानध्वंसयत् । तदीयं च सर्वस्वं स्वयमेवाग्रसत् । वानवास्यं केनचिदंशेनानुगृह्य प्रत्यावृत्य सर्वमनन्तवर्मराज्यमात्मसादकरोत् ।

अस्मिंश्चान्तरे मंत्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः संभूय बालमेनं भास्करवर्माणमस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीमनयोश्च मातरं महादेवीं वसुन्धरामादायापसर्पन्नापदोऽस्या भावितया दाहज्वरेण देहमजहात् । अस्मादृशैर्मित्रैस्तु नीत्वा माहिष्मतीं भर्तृद्वैमातुराय भ्रात्रे मित्रवर्मणे सापत्या देवी दर्शिताभूत् । तां चार्यामनार्योऽसावन्यथाभ्यमन्यत । निर्भर्त्सितश्च तया 'सुतमियमखण्डचारित्रा राज्यार्हं चिकीर्षति' इति नैर्घृण्यात्तमेनं बालमजिघांसीत् । इदं तु ज्ञात्वा देव्याहमाज्ञप्तः—'तात नालीजङ्घ, जीवतानेनार्भकेण यत्र क्वचिदवधाय जीव । जीवेयं चेदहमप्येनमनुसरिष्यामि । ज्ञापय मां क्षेमप्रवृत्तः स्ववार्ताम्' इति । अहं तु संकुले राजकुले कथंचिदेनं निर्गमय्य विन्ध्याटवीं व्यगाहिषि । पादचारिणं चैनमाश्वासयितुं घोषे क्वचिदहानि कानिचिद्विश्रमय्य तत्रापि राजपुरुषसंपातभीतो दूराध्वमपासरम् । तत्रास्य दारुणपिपासापीडितस्य वारि दातुकामः कूपेऽस्मिन्नपभ्रश्य पतितस्त्वयैवमनुगृहीतः । त्वमेवास्यातः शरणमेधि विशरणस्य राजसूनोः' इत्यञ्जलिमबध्नात् । 'किमीया जात्यास्य माता' इत्यनुयुक्ते मयामुनोक्तम्—'पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोशलेन्द्रात्कुसुमधन्वनोऽस्य

---

जगाम । आमिषेण प्रलोभनद्रव्येण । मौलैः मूलादागतैः कुलक्रमागतैः । अपसर्पन्निर्गच्छन् । द्वैमातुराय सापत्नभ्रात्रे । द्वयोर्मात्रोरपत्यं द्वैमातुरः । अखण्डचारित्रा अभ्रष्टचारित्रा । राज्यार्हं राज्याधिकारिणम् । अर्भकेण बालेन । अवधाय निश्चित्य । क्षेम—सकुशलं गतः । पादचारिणं चरणगामिनम् । घोष आभीरपल्ली । संपातेन आक्रमणेन । एधि भव । अस् भुवि । दूराध्वम् दूरमार्गम् । अपभ्रश्य पतित्वा । विशरणस्य शरणरहितस्य । कस्येयं किमीया । अश्मकनयेन पाषाणोन्मूलनेन । नयावलिप्तं नीत्यभिमानिनम् । पदे स्थाने । इषून् बाणान् । सपत्राकृतः पत्रेण सह विद्धः । सपुंखशरप्रवेशनेन सपत्रं कृत्वा । 'सपत्रनिष्पत्रादतिव्यथने' इति डाच् । अन्यो द्वितीयो-

माता जाता' इति। 'अद्यैवमेतन्मातुर्मे पितुश्चैको मातामहः' इति सस्नेहं तमहं सस्वजे। वृद्धेनोक्तम्, 'सिन्धुदत्तपुत्राणां कतमस्ते पिता' इति। 'सुश्रुतः' इत्युक्ते सोऽत्यहृष्यत्। अहं तु 'तं नयावलिप्तमश्मकेन्द्रं नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयम्' इति प्रतिज्ञाय 'कथमस्यैनां क्षुधं क्षपयेयम्' इत्यचिन्तयम्। तावदापतितौ च कस्यापि व्याधस्य त्रीनिषूनतीत्य द्वौ मृगौ स च व्याधः। तस्य हस्तादवशिष्टमिषुद्वयं कोदण्डं चाक्षिप्यावधिषम्। एकश्च सपत्राकृतोऽन्यश्च निष्पत्राकृतोऽपतत्। तं चैकं मृगं दत्त्वा मृगयवे, अन्यस्यापलोमत्वचः क्लोमापोह्य, निष्कुलाकृत्य, विकृत्योर्वस्थिग्रीवादीनि शूलाकृत्य दावाङ्गारेषु तप्तेनामिषेण तयोरात्मनश्च क्षुधमत्यतार्षम्। एतस्मिन्कर्मणि मत्सौष्ठवेनातिहृष्टं किरातमस्मि पृष्टवान्—'अपि जानासि माहिष्मतीवृत्तान्तम्' इति। असावाचष्ट—'तत्र व्याघ्रत्वचो दृतीश्च विक्रीयाद्यैवागतः। किं न जानामि। प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं विलिप्सुरभ्येतीति तेनोत्सवोत्तरा पुरी' इति। अथ कर्णे जीर्णमब्रवम्—'धूर्तो मित्रवर्मा दुहितरि सम्यक्प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन प्रत्याकृष्य बालकं जिघांसति। तत्प्रतिगत्य कुशलमस्य मद्वार्तां च देव्यै रहो निवेद्य पुनः कुमारः शार्दूलभक्षित इति प्रकाशमाक्रोशनं कार्यम्। स दुर्मतिरन्तःप्रीतो बहिर्दुःखं दर्शयन्देवीमनुनेष्यति। पुनस्तया त्वन्मुखेन स वाच्यः—'यदपेक्षया त्वन्मतमत्यक्रमिषं सोऽपि बालः पापेन मे परलोकमगात्। अद्य तु त्वदादेशकारिण्येवाहम्'।

---

निष्पत्राकृतः सपुंखस्य शरस्य अपरपार्श्वेन निर्गमनात् निष्पत्रं कृत्वा। मृगयवे लुब्धकाय। अपलोम रोमशून्यम्। क्लोम मस्तिष्कम्। 'तिलकं क्लोम मस्तिष्कम्' इत्यमरः। निष्कुलाकृत्य निष्कोष्य। 'निष्कुलान्निःकोषणे' इति डाच्। विकृत्य विच्छेद्य। शूलाकृत्य शूले कृत्वा। शूलेन पाचयित्वा। 'शूलात्पाके' इति डाच्। दावाङ्गारेषु वनवन्हिषु। तप्तेन भर्जितेन। आमिषेण मांसेन। अतार्षमतिक्रान्तवान्। दृतीश्चर्मपुटानि। विलिप्सुः लब्धुमिच्छुः। उत्सवोत्तरोत्सवपूर्णा। जीर्णं वृद्धम्। सम्यक्प्रतिपत्योचिताचरणेन। रह एकान्ते। आक्रोशनम् कथनम्। अभिपतस्यत्यङ्गीकरिष्यति। वत्सनाभः। 'दारदो वत्सनाभः स्यात्' इत्यमरः। संनीय संमिश्र्य। तया मालया। अगदेनौषधेन। 'संजीवनं स्यादगम्'

इति। स तथोक्तः प्रीतिं प्रतिपद्याभिपत्स्यति। पुनरनेन वत्सनाभनाम्ना महाविषेण संनीय तोयं तत्र मालां मज्जयित्वा तया स वक्षसि मुखे च हन्तव्यः। 'स एवायमसिप्रहारः पापीयसस्तव भवतु यद्यस्मि पतिव्रता' इति। पुनरनेनागदेन संगमितेऽम्भसि तां मालां मज्जयित्वा स्वदुहित्रे देया। मृते तु तस्मिंस्तस्यां च निर्विकारायां सत्यां सतीत्यैवैनां प्रकृतयोऽनुवर्तिष्यन्ते। पुनः प्रचण्डवर्मणे संदेश्यम्। 'अनायकमिदं राज्यम्। अनेनैव सह बालिकेयं स्वीकर्तव्या' इति। तावदावां कापालिकवेषच्छन्नौ देव्यैव दीयमानभिक्षौ पुरो बहिरुपश्मशानं वत्स्यावः। पुनरार्यप्रायान्पौरवृद्धानाप्तांश्च मन्त्रिवृद्धानेकान्ते ब्रवीतु देवी—'स्वप्नेऽद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः। अद्य चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति। पञ्चमेऽहनि रेवातटवर्तिनि मङ्कवने परीक्ष्य वैजन्यं, जनेषु निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति। स राज्यमिदमनुपाल्य बालं ते प्रतिष्ठापयिष्यति। स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य स्थापितः। सा चेयं वत्सा मञ्जुवादिनी तस्य द्विजातिदारकस्य दारत्वेनैव कल्पिता' इति। तदेतदतिरहस्यं युष्मास्वेव गुप्तं तिष्ठतु यावदेतदुपपत्स्यते' इति। स सांप्रतमतिप्रीतः प्रयातोऽर्थश्चायं यथाचिन्तितमनुष्ठितोऽभूत्। प्रतिदिशं च लोकवादः प्रासर्पत्—'अहो माहात्म्यं पतिव्रतानाम्। असिप्रहार एव हि स मालाप्रहारस्तस्मिन् जातः। न शक्यमुपधियुक्तमेतत्कर्मेति वक्तुं, यतस्तदेव दत्तं दाम दुहित्रे स्तनमण्डनमेव तस्यै जातं, न मृत्युः। योऽस्याः पतिव्रतायाः शासनमतिवर्तते स भस्मैव भवेत्' इति।

---

इति वैजयन्ती। तस्यां स्वदुहितरि। निर्विकारायां विकारशून्यायाम्। प्रकृतयः प्रजाः। संदेश्यम् कथनीयम्। कापालिको—व्रतधारी। 'कापाली स्यान्महाव्रती' इति कोशः। पुरो बहिः नगराद्बहिः। उप—श्मशानसमीपे। आर्यप्रायान्। श्रेष्ठीन्। स्वप्ने-स्वप्नावस्थायाम्। मे मह्यम्। मरिष्यतीति 'मृङ् प्राणत्यागे' इत्यस्य रूपम्। वैजन्यं विजनस्य भावः एकान्तम्। उपपत्स्यते भविष्यति। तिरस्कृत्य लोकलोचनत आच्छिद्य। द्विजातिदारकस्य वणिक्पुत्रस्य। दारत्वेन स्त्रीत्वेन। युष्मास्वेव भवत्स्वेवेत्यर्थः। प्रासर्पत्प्रसृतोऽभूत्। उपधिः कपटम्। दाम माला। दुहित्रे कन्यायै। स्तनमण्डनं कुचभूषणम्। शासनमाज्ञाम्। अतिवर्ततेऽतिक्रामति। प्रस्नुतस्तनी पयःप्रसरत्स्तनौ।

"अथ महाव्रतिवेषेण मां च पुत्रं च भिक्षायै प्रविष्टौ दृष्ट्वा प्रस्तुतस्तनी प्रत्युत्थाय हर्षाकुलमब्रवीत्—'भगवन्, अयमञ्जलिः। अनाथोऽयं जनोऽनुगृह्यताम्। अस्ति ममैकः स्वप्नः, स किं सत्यो न वा' इति। मयोक्तम्—'फलमस्याद्यैव द्रक्ष्यसि' इति। 'यद्येवं बहुभागधेयमस्या वो दास्याः। स खल्वस्याः सानाथ्यशंसी स्वप्नः' इति मद्दर्शनरागबद्धसाध्वसां मञ्जुवादिनीं प्रणमय्य, भूयोऽपि सा हर्षगर्भमब्रूत—'तच्चेन्मिथ्या सोऽयं युष्मदीयो बालकपाली श्वो मया निरोद्धव्यः' इति। मयापि सस्मितं मञ्जुवादिनीरागलीनदृष्टिलीढधैर्येण 'एवमस्तु' इति लब्धभैक्ष्यो, नालीजङ्घमाकार्य निर्गम्य ततश्च तं चानुयान्तं शनैरपृच्छम्—'कासावल्पायुः प्रथितः प्रचण्डवर्मा' इति। सोऽब्रूत—'राज्यमिदं ममेत्यपास्तशङ्को राजास्थानमण्डप एव तिष्ठत्युपास्यमानः कुशीलवैः' इति। 'यद्येवमुद्याने तिष्ठ' इति तं जरन्तमादिश्य, तत्प्राकारैकपार्श्वे क्वचिच्छून्यमठिकायां मात्राः समवतार्य, तद्रक्षणनियुक्तराजपुत्रः, कृतकुशीलववेषलीलः प्रचण्डवर्माणमेत्यान्वरञ्जयम्। अनुरञ्जितातपे तु समये जनसमाजज्ञानोपयोगीनि संहृत्य नृत्यगीतनानारुदितादिहस्तचङ्क्रमणमूर्ध्वपादालातपादापीडवृश्चिकमकरलङ्घनादीनि मत्स्योद्वर्तनादीनि च करणानि पुनरादायादायासन्नवर्तिनां

---

सानाथ्यशंसी सनाथस्य भावः सानाथ्यं तच्छंसतेऽसौ तथा। अस्या मञ्जुवादिन्याः मद्दर्शनरागेण बद्धं साध्वसं भयं ययेति सा ताम्। मञ्जुवादिनीम्। प्रणमय्य—नमस्कारं कारयित्वेत्यर्थः। सस्मितं-सहासम्। लीढमास्वादितम्। लब्धभैक्षः प्राप्तभिक्षः। आकार्याहूय। अनुयान्तं पश्चाद् गच्छन्तम्। 'आस्थानमण्डपे सभामण्डपे। कुशीलवैः गायकैः। जरन्तं वृद्धम्। अल्पो मठो मठिका। मात्राः परिच्छदादीन्। मात्रा परिच्छदेऽल्पेऽंशे प्रवृत्तौ कर्णभूषणे। अक्षरावयये माने' इति वैजयन्ती। नानारुदितानि रोदनशब्दानुकरणानि। हस्तयोश्चङ्क्रमणमितस्ततः प्रसारणम्। भ्रमणं ऊर्ध्वपादमलातपादम्। 'कराभ्यामवनीं स्पृष्ट्वा मूर्धानं भ्रामयेन्मुहुः। उत्तानीकृत्य चरणावूर्ध्वपादं तदुच्यते' इति नृत्याध्याये भरतः। 'उद्धृत्यैकं तु चरणमन्यं कृत्वैव कुञ्चितम्। नृत्यत्यनुमतं तिर्यक्तदालातकमेव च' इत्यपि। वृश्चिकलङ्घनं मकरलङ्घनं चेति द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यते। मत्स्योद्वर्तनानि मीनवद्विलसितानि। क्षुरिकाः शस्त्राणि। उपाहितवर्म्मा संयुक्तशरीरः। श्येनपातः। परिक्रम्यान्तरिक्षेण

क्षुरिकास् ताभिरुपहितवर्ष्मा चित्रदुष्कराणि करणानि श्येनपातोत्क्रोशपातादीनि दर्शयन्, विंशतिचापान्तरालावस्थितस्य प्रचण्डवर्मणश्छुरिकयैकया प्रत्युरसं प्रहृत्य, 'जीव्याद्वर्षसहस्रं वसन्तभानुः' इत्यभिगर्जन्, मद्गात्रमुत्कर्तुमुद्यतासेः कस्यापि चारभटस्य पीवरांसबाहुशिखरमाक्रम्य, तावतैव तं विचेतीकुर्वन्, आकुलं च लोकमुच्चक्षूकुर्वन्, द्विपुरुषोच्छ्रितं प्राकारमत्यलङ्घयम्। अवप्लुत्य चोपवने 'मदनुपातिनामेष पन्था दृश्यते' इति ब्रुवाण एव नालीजङ्घसमीकृतसैकतास्पष्टपादन्यासया तमालवीथ्या चानुप्राकारं प्राचा प्रतिप्रधावितः, पुनरवाचोच्चितेष्टकचितत्वादलक्ष्यपातेन प्रद्रुत्य, लङ्घितप्राकारवप्रखातवलयस्, तस्यां शून्यमठिकायां तूर्णमेव प्रविश्य, प्रतिमुक्तपूर्ववेषः सह कुमारेण मत्कर्मतुमुलराजद्वारि दुःखलब्धवर्त्मा श्मशानोद्देशमभ्यगाम्। प्रागेव तस्मिन्दुर्गागृहे प्रतिमाधिष्ठान एव मया कृतं भग्नपार्श्वस्थैर्यस्थूलप्रस्तरस्थगितबाह्यद्वारं बिलम्।

अथ गलति मध्यरात्रे वर्षधरोपनीतमहार्हरत्नभूषणपट्टनिवसनौ तद्बिलमावां प्रविश्य तूष्णीमतिष्ठाव। देवी तु पूर्वेद्युरेव यथार्हमग्निसंस्कारं मालवाय दत्त्वा प्रचण्डवर्मणे चण्डवर्मणे च तामवस्थामश्मकेन्द्रोपधिकृतामेव संदिश्य, उत्तरेद्युः प्रत्युषस्येव पूर्वसंकेतितपौरामात्यसामन्तवृद्धैः सहाभ्येत्य भगवतीमर्चयित्वा, सर्वजनप्रत्यक्षं परीक्षितकुक्षिवैजन्यं तद्भवनं विधाय दत्तदृष्टिः

---

संप्राप्योच्चैरदृश्यताम्। आकस्मिकाभिपातेन श्येनपात इतीरितः' इति। उत्क्रोशपातश्च कुररपातः। 'उत्क्रोशकुररौ समौ' इत्यमरः। चापः। 'प्रसारितबाहुद्वयप्रमाणं चाप इत्युच्यते'। मद्गात्रं मच्छरीरम्। उत्कर्तुं त्रोटितुम्। उद्यतासेरूर्ध्वीकृतखड्गस्य। चारभटस्य चारश्चासौ भटश्चेति। 'भटश्चारभटो मतः' इति हलायुधः। पीवरांसं मांसलस्कन्धम्। द्विपुरुषोच्छ्रितं पुरुषद्वयप्रमाणोच्चम्। अवप्लुत्योड्डीय। सैकतं सिकतामयम्। अस्पष्टपादन्यासया न स्पष्टः पादन्यासश्चरणपातो यस्यामिति। तमालवीथ्या तमालपङ्क्त्या। अवाचा पश्चिमेन। उच्चनीचस्थापितेष्टकत्वात्। खातः नालिका। प्रतिमुक्तः संबद्धः पूर्ववेषो येन। तुमुलो व्याकुलरवः। प्रस्तरः पाषाणः। 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः। गलति गच्छति। वर्षधरः 'षण्ढो वर्षधरः' इत्यमरः। तेनोपनीतानि महार्हाणि महामूल्यानि रत्नभूषणानि पट्टनिवसनानि पट्टवस्त्राणि

सह जनेन स्थित्वा, पटीयांसं पटहशब्दमकारयत् । अणुतररन्ध्र-प्रविष्टेन तेन नादेनाहं दत्तसंज्ञः शिरसैवोत्क्षिप्य सप्रतिमं लोहपाद-पीठमंसलपुरुषप्रयत्नदुश्चलमुभयकरविधृतैकपार्श्वमेकतो निवेश्य निरगमम्। निरगमयं च कुमारम्। अथ यथापूर्वमर्पयित्वा दुर्गमुद्घा-टितकपाटः प्रत्यक्षीभूय प्रत्ययहृष्टदृष्टि स्पष्टरोमाञ्चमुद्यताञ्जलि रूढ-विस्मयं च प्रणिपतन्तीः प्रकृतीरभ्यधाम्—'इत्थं देवी विन्ध्यवासिनी मन्मुखेन युष्मानाज्ञापयति—'स एष राजसूनुरापन्नो मया सकृपया शार्दूलरूपेण तिरस्कृत्याद्य वो दत्तः तमेनमद्यप्रभृति मत्पुत्रतया मन्द-मातृपक्ष इति परिगृह्णन्तु भवन्तः। अपि च दुर्घटकूटकोटिघटनापाटव-प्रकटशाठ्यनिष्ठुराश्मकघटघट्टनात्मानं मां मन्यध्वमस्य रक्षितारम्। रक्षानिर्वेशश्चास्य स्वसेयं सुभ्रूरभ्यनुज्ञाता मह्यमार्यया' इति। श्रुत्वैतत् 'अहो भाग्यवान्भोजवंशो यस्य त्वमार्यादत्तो नाथः' इत्यप्रीयन्त प्रकृतयः। सा तु वाचामगोचरां हर्षावस्थामस्पृशन्मे श्वश्रूः। तदहरेव च यथावदग्राहयन्मञ्जुवादिनीपाणिपल्लवम्। प्रपन्नायां च यामिन्यां सम्यगेव बिलं प्रत्यपूरयम्। अलब्धरन्ध्रश्च लोको नष्टमुष्टिचिन्तादिकथनैरभ्युपायान्तरप्रयुक्तैर्दिव्यांशतामेव मम समर्थयमानो मदाज्ञां नात्यवर्तत। राजपुत्रस्यार्यापुत्र इति प्रभावहेतुः प्रसिद्धिरासीत्। तं च गुणवत्यहनि भद्राकृतमुपनाय्य पुरोहितेन पाठयन्नीतिं राजकार्याण्यन्वतिष्ठम्। अचिन्तयं च 'राज्यं नाम शक्तित्रयायत्तं शक्तयश्च मंत्रप्रभावोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते। मंत्रेण हि विनिश्चयोऽर्थानां प्रभावेण प्रारम्भ उत्सा-

---

च ययोस्तौ। पूर्वेद्युः पूर्वदिवसे। प्रत्युषसि प्रातःकाले। पटीयांसं पटुतरम्। पटह-शब्दं दुन्दुभिध्वनिम्। अंसलः पीवरः। 'बलवान्मांसलोंऽसल' इत्यमरः। निरगम-यम् बहिरकार्षम्। प्रत्ययेन विश्वासेन हृष्टा दृष्टिर्यत्रेति। प्रकृतीः प्रजाः। तिरस्कृत्या-न्तर्धाय। आपन्नो विपन्नः मातृपक्षो यस्य। दुर्घटं दुःखेन घटनीयं यत् कूटं कपटं तस्य कोटिरग्रम्, तस्य घटनायां यत् पाटवं कौशलं तेन प्रकटं व्यक्तं यच्छाठ्यं तेन निष्ठुरोऽश्मक एव घटस्तस्य घट्टनो चालयिता आत्मा यस्य। निर्वेशः भृतिः। 'निर्वेशो भृतिभागयोः' इत्यमरः। अगोचरामविषयाम्। दिव्यांशतां दिवि भवा दिव्यास्तेषामंश-स्तस्य भावस्तत्ता ताम्। आर्यापुत्रो भवानीपुत्रः। गुणवति निर्दोषे। भद्राकृतम् अपनीतश्मश्रुम्। उपनाय्योपनयनं कारयित्वा। आयत्तम् अधीनम्।

हेन निर्वहणम् । अतः पञ्चाङ्गमंत्रमूलो द्विरूपप्रभावस्कन्धश्चतुर्गुणोत्साहविटपो द्विसप्ततिप्रकृतिपत्रः षड्गुणकिसलयः शक्तिसिद्धिपुष्पफलश्च, नयवनस्पतिर्नेतुरुपकरोति । स चायमनेकाधिकरणत्वादसहायेन दुरुपजीव्यः । यस्त्वयमार्यकेतुर्नाम मित्रवर्ममंत्री स कोशलाभिजनत्वात्कुमारमातृपक्षो मंत्रिगुणैश्च युक्तः, तन्मतिमवमत्यैव ध्वस्तो मित्रवर्मा, स चेल्लब्धः पेशलम्' इति। अथ नालीजङ्घं रहस्यशिक्षयम्-'तात, आर्यमार्यकेतुमेकान्ते ब्रूहि-'को न्वेष मायापुरुषो य इमां राज्यलक्ष्मीमनुभवति । स चायमसद्व्यालो भुजङ्गेनामुना परिगृहीतः । किमुद्गीर्येत ग्रस्येत वा' इति स यद्वदिष्यति तदस्मि बोध्यः' इति । सोऽन्यदैवं मामावेदयत्—'मुहुरुपास्य प्राभृतैः प्रवर्त्य चित्राः कथाः संवाह्य पाणिपादमतिविस्रम्भदत्तक्षणं तमप्राक्षं त्वदुपदिष्टेन नयेन । सोऽप्येवमकथयत्-'भद्र, मैवं वादीः । अभिजनस्य शुद्धिर्दर्शनमसाधारणं बुद्धिनैपुणमतिमानुषं प्राणबलमपरिमाणमौदार्यमत्याश्चर्यमस्त्रकौशलमनल्पं शिल्पज्ञानमनुग्रहार्द्रं चेतस्तेजश्चाप्यविषह्यमभ्यमित्रीणमित्यस्मिन्नेव संनिपातिनो गुणा येऽन्यत्रैकैकशोऽपि दुर्लभाः । द्विषतामेष चिरबिल्वद्रुमः प्रह्वानां तु चन्दनतरुस्तदुद्धृत्य

---

परस्परानुगृहीता अन्योन्यकृतसहायाः । पञ्चाङ्गमंत्रमूलः । 'सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमुच्यते ॥' इति कामन्दकः । द्विरूपप्रभावोऽर्थानां पुरुषाणां च समृद्धिः । स्कन्धः शाखा । चतुर्गुणो य उत्साहः स एव विटपाः शाखाः द्विसप्ततिप्रकृतयः प्रजाः पत्राणि यस्येति सः । षड्गुणाः किसलयानि यस्येति सः । शक्तिसिद्धिःपुष्पफलश्च । शक्तित्रयं पुष्पं सिद्धित्रयं च फलम् । 'षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः । इति । नय एव वनस्पतिर्नीतितरुः । अनेकाधिकरणत्वादनेकप्रकारकत्वात् । दुरुपजीव्यो दुःखेनोपजीवितुं शक्यः । कोसलाभिजनत्वात्कोसलवंशत्वात् । 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः । मंत्रिगुणैः प्रधानगुणैः । अवमत्यावगणय्य । पेशलं मञ्जुलम् । रहसि एकान्ते । न्विति वितर्के । भुजङ्गः सर्पः । उद्गीर्येत त्यज्येत । उपास्य सेवित्वा । प्राभृतैरुपायनैः । संवाह्य उपपीड्य । विश्रम्भो विश्वासः । भद्र कल्याणेति संबोधनम् । अभिजनस्य कुलस्य । असाधारणम् महत् । अतिमानुषं मानुषमतिक्रम्य वर्तत इति । अपरिमाणम् परिमाणरहितम् । शिल्पज्ञानं रचनाज्ञानम् । अविषह्यं सोढुमशक्यम् । अभ्यमित्रीणममित्रान् शत्रूनभिमुखमलं गच्छतीति । संनिपातिन एकत्रावस्थिताः । चिरबिल्वद्रुमो विषद्रुमः । प्रह्वानां

नीतिज्ञमन्यमश्मकमिमं च राजपुत्रमनेन पित्र्ये पदे प्रतिष्ठितमेव विद्धि । नात्र संशयः कार्यः' इति । तच्चापि श्रुत्वा भूयोभूयश्चोपधाभिर्विशोध्य तं मे मतिसहायमकरवम् । तत्सखश्च सत्यशौचयुक्तानमात्यान्विविधव्यञ्जनांश्च गूढपुरुषानुदपादयम् । तेभ्यश्चोपलभ्य लुब्धसमृद्धमत्युत्सिक्तमविधेयप्रायं च प्रकृतिमण्डलमलुब्धतामभिख्यापयन्, धार्मिकत्वमुद्भावयन्, नास्तिकान्कदर्थयन्, कण्टकान्विशोधयन्, अमित्रोपधीरपघ्नन्, चातुवर्ण्यं च स्वधर्मकर्मसु स्थापयन्, अभिसमाहरेयमर्थाननर्थमूला हि दण्डविशिष्टकर्मारम्भा न चान्यदस्ति पापिष्ठं तत्र दौर्बल्यात् इत्याकलय्य योगानन्वतिष्ठम् ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते विश्रुतचरितं नामाष्टम उच्छ्वासः ॥

---

विनीतानाम् । पित्र्यं पितुरिदम् । उपधाभिः 'उपधा धर्माद्यैर्यत्परीक्षणम्' इत्यमरः । तस्य सखा तत्सखः । 'राजाहःसखिभ्यष्टच्' इति टच् । सत्यं सत्यप्रतिज्ञानम् । शौचं शुद्धिः । गूढपुरुषान्गुप्तसेवकान् । कण्टकान् रिपून् । अभिख्यापयन्प्रकटीकुर्वन् । उपधीः कूटप्रयोगान् । चातुवर्ण्यं चत्वारो वर्णाः । अर्थमूला अर्थाधीनाः । आकलय्य मनसि कृत्वा । योगान्विविधोपायान् ।

# कादम्बर्याम्

## आश्रमवर्णनम्

अनतिदूरमिव गत्वा दिशि दिशि सदा संनिहितकुसुमफलै-स्तालतिलकतमालहिन्तालबकुलबहुलैरेलालताकुलितनालिकेरीक-लापैर्लोललोध्रलवलीलवङ्गपल्लवैरुल्लसिताम्ररेणुपटलैरलिकुलझङ्का-रमुखरसहकारैरुन्मदकोकिलकुलकलापकोलाहलिभिरुत्फुल्लकेतकी-रजःपुञ्जपिञ्जरैः पूगीलतादोलाधिरूढवनदेवतैस्तारकावर्षमिवा-धर्मविनाशपिशुनं कुसुमनिकरमनिलचलितमनवरतमतिधवलमु-त्सृजद्भिः संसक्तपादपैः काननैरुपगूढम्, अचकितप्रचलितकृष्ण-सारशतशबलाभिरुत्फुल्लकमलिनीलोहिनीभिर्मारीचमायामृगावलून-

---

वैशम्पायनो नाम शुकः आत्मकथां कथयन् आश्रमं विशिनष्टि—काननैर्वनैः । 'विपिनं काननं वनम्' इत्यमरः । उपगूढम् व्याप्तम् । संनिहितकुसुमफलैः—संनि-हितानि निकटस्थानि कुसुमानि फलानि च येषां तैः । तिलकः पुष्पवृक्षविशेषः । तमालस्तापिच्छः, हिन्तालः स्थूलतालादिपर्यायिभाग् वृक्षविशेषः । बकुलः केसरः । एला इलायची । आकुलिता व्याप्ता नालिकेरीकलापाः नारियल इति प्रसिद्धानां वृक्षाणां समूहा यत्र तैः । लोध्रो लोध इति भाषायाम् । लवली सुगन्धमूला । आम्ररेणु-पटलानि रसालपरागपुञ्जानि । 'आम्रश्चूतो रसालोऽसौ' इत्यमरः । अलिकुलानां भ्रमरसमूहानां झङ्कारेण मुखरा वाचालाः सहकारा अतिसौरभा येषु तैः । उन्मदानां मदोन्मत्तानां कोकिलकुलानां कोलाहलः कलकलो येषु तैः । उत्फुल्लानां विकसितानां केतकीनां रजसः परागस्य पुञ्जेन पिञ्जरैः पिङ्गलवर्णैः । पूगीलताः क्रमुकवल्ल्य एव दोलाः प्रेङ्खास्तासु अधिरूढा उपर्यारूढा वनदेवता वनाधिष्ठात्र्यो देवता येषु तैः । अन-वरतं सततम् अनिलचलितं वायुप्रेरितम् अतिधवलमत्युज्ज्वलं शुभ्रं वा कुसुमनिकरं पुष्पसमूहम् उत्सृजद्भिः विकिरद्भिः वनैः संसक्ताः परस्परमाश्लिष्टाः पादपा वृक्षा येषु तैः । दण्डकारण्यस्थलीभिः प्रसिद्धस्य दण्डकारण्यस्याकृत्रिमभूमिभिः उपशोभितः प्रान्तः प्रदेशो यस्य तम् । स्थलीं विशिनष्टि—अचकितेति । अचकिता अभीताः प्रचलिता गच्छन्तो ये कृष्णसाराः कृष्णमृगास्तेषां शतैः दशशत-संख्यैरित्यर्थः शबलाभिः किर्मीराभिः । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे'

रूढवीरुद्दलाभिर्दाशरथिचापकोटिक्षतकन्दगर्तविषमिततलाभिर्दण्ड-कारण्यस्थलीभिरुपशोभितप्रान्तम्, आगृहीतसमित्कुशकुसुम-मृद्भिरध्ययनमुखरशिष्यानुगतैः सर्वतः प्रविशद्भिर्मुनिभिरशून्यो-पकण्ठम्, उत्कण्ठिशिखण्डिमण्डलश्रूयमाणजलकलशपूरणध्वानम्, अनवरताज्याहुतिप्रीतैश्चित्रभानुभिः सशरीरमेव मुनिजनममरलोकं निनीषुभिरुद्धूयमानधूमलेखाच्छलेनाबध्यमानस्वर्गमार्गगमनसोपान-सेतुभिरिवोपलक्ष्यमाणम्, आसन्नवर्तिनीभिस्तपोधनसंपर्कादिवा-पगतकालुष्याभिस्तरंगपरंपरासंक्रान्तरविबिम्बपङ्क्तिभिस्तापसदर्श-नागतसप्तर्षिमालाविगाह्यमानाभिरिव विकचकुमुदवनमृषिजन-मुपासितुमवतीर्णं ग्रहगणमिव निशासूद्वहन्तीभिर्दीर्घिकाभिः परिवृतम्, अनिलावनमितशिखराभिः प्रणम्यमानमिव वनलता-भिरनवरतमुक्तकुसुमैरभ्यर्च्यमानमिव पादपैः, आबद्धपल्लवाञ्ज-लिभिरुपास्यमानमिव विटपैः, उटजाजिरप्रकीर्णशुष्यच्छयामाकम्, उपसंगृहीतामलकलवलीकर्कन्धूकदलीलकुचरसालपनसताली-

---

इत्यमरः। उत्फुल्ला विकचिता याः कमलिन्यः पद्मिन्यस्ताभिः लोहिनीभिः लोहित-वर्णाभिः। मारीचो यो मायामृगस्तेन पूर्वमवलूनानि छिन्नानि पश्चात् रूढानि प्ररूढानि वीरुधां वल्लीनां दलानि पर्णानि यासु ताभिः। दाशरथे रामस्य चापस्य कोदण्डस्य कोट्या अग्रभागेन क्षतानि उत्पाटितानि यानि कन्दानि तेषां गर्तैः भूविवरैर्विषमितं निम्नोन्नतं तलं यासां ताभिः। समिध एधांसि। कुशा दर्भाः। मृदो मृत्तिकाः। अध्ययनेन वेदपारायणेन मुखरा वाचाला ये शिष्याः तैरनुगतैः। ध्वानो नादः। आज्याहुतयः घृताहुतयः। चित्रभानुभिः वह्निभिः। निनीषुभिः नेतुमिच्छद्भिः। उद्धूयमाना कम्पमाना या धूमलेखा धूमपङ्क्तिः तस्या इत्यादि। दीर्घिकाभिः वापीभिः। वापीर्विशिनष्टि—आसन्नवर्तिनीभिः समीपस्थिताभिः तपोधनानां मुनीनां संपर्कात् संसर्गादिव अपगतकालुष्याभिः निर्गतमलाभिः तरङ्गपरम्परासु कल्लोलपंक्तिषु संक्रान्ता प्रतिबिम्बिता रविबिम्बपङ्क्तयः सूर्यबिम्बपङ्क्तयो यासु ताभिः। विकचं विकसितं कुमुदवनं निशासु रात्रिषु उद्वहन्तीभिः धारयन्तीभिः। पुनराश्रमं विशिनष्टि—अनिलेन वायुना अवनमितमधो नामितं शिखरं शृङ्गं यासां ताभिः वनलताभिः प्रणम्यमानम् इव। अनवरतं सततं मुक्तानि विकीर्णानि कुसुमानि पुष्पाणि यैस्तैः पादपैर्वृक्षैरभ्यर्च्यमानमिव सत्क्रियमाणमिव। आबद्धा रचिताः पल्लवा एवाञ्जलयो यैस्तैर्विटपैः पादपैः उपास्यमानमिव सेव्यमानमिव। उटजाजिरे पर्णशालाङ्गणे।

फलम्, अध्ययनमुखरबटुजनम्, अनवरतश्रवणगृहीतवषट्कारवाचालशुककुलम्, अनेकसारिकोद्घुष्यमाणसुब्रह्मण्यम्, अरण्यकुक्कुटोपभुज्यमानवैश्वदेवबलिपिण्डम्, आसन्नवापीकलहंसपोतभुज्यमाननीवारबलिम्, एणीजिह्वापल्लवोपलिह्यमानमुनिबालकम्, अग्निकार्यार्धदग्धमिसमिसायमानसमित्कुशकुसुमम्, उपलभग्ननालिकेररसस्निग्धशिलातलम्, अचिरक्षुण्णवल्कलरसपाटलभूतलम्, रक्तचन्दनोपलिप्तादित्यमण्डलनिहितकरवीरकुसुमम्, इतस्ततो विक्षिप्तभस्मलेखाकृतमुनिजनभोजनभूमिपरिहारम्, परिचितशाखामृगकराकृष्टिनिष्कास्यमानप्रवेश्यमानजरदन्धतापसम्, इभकलभार्धोपभुक्तपतितैः सरस्वतीभुजलताविगलितैः शङ्खवलयैरिव मृणालशकलैः कल्माषितम्, ऋषिजनार्थमेणकैर्विषाणशिखरोत्खन्य-

---

उपसंगृहीतानि राशीकृतानि आमलकं धात्री लवली लताविशेषः, कर्कन्धूर्बदरी, कदली रम्भा, लकुचः लिकुचः 'लकुचो लिकुचो डहुः' इत्यमरः। रसाल आम्रः, पनसः 'कटहल' इति भाषाप्रसिद्धो वृक्षविशेषः, ताली तृणराज एतेषां फलानि यत्र तम्। 'पनसः कण्टकिफलो निचुलः' इत्यमरः। अध्ययनेन मुखरा वाचाला बटुजना ब्रह्मचारिणो यत्र तम्। अनेकाभिः सारिकाभिः पीतपादाभिः उद्घुष्यमाणमुच्चैः स्वरेणोच्चार्यमाणं सुब्रह्मण्यं वेदो यत्र तम्। अरण्यकुक्कुटैः उपभुज्यमानो भक्ष्यमाणो देवयज्ञस्य बलिपिण्डो यत्र तम्। आसन्ना समीपस्थिता या वापी दीर्घिका तस्याः कलहंसपोतैः कलहंसशिशुभिः भुज्यमानो नीवारबलिः यत्र तम्। एणीभिः मृगविशेषयोषिद्भिः। जिह्वा एव पल्लवास्ताभिः उपलिह्यमानाः मुनिबालका यत्र तम्। अग्निकार्ये होमे अर्धदग्धानि अतएव मिसमिसायमानानि मिसमिसशब्दमाचरन्ति समिधः कुशाः कुसुमानि यत्र तम्। उपलेन दृषदा। पाटलं श्वेतरक्तम्। रक्तचन्दनेन उपलिप्तमालिखितं यदादित्यमण्डलं तत्र निहितानि स्थापितानि करवीरस्य हयमारस्य कुसुमानि यत्र तम्। 'प्रतिहास-शतप्रास-चण्डात-हयमारकाः करवीरे' इत्यमरः। इतस्ततो विक्षिप्तं विकीर्णं यद् भस्म भूतिः। 'भूतिर्भस्मनि सम्पदि' इत्यमरः। तस्य लेखया रेखया कृतो विहितो मुनिजनस्य भोजनस्य भूमेः परिहारो निवारणं यत्र तम्। परिचितानां शाखामृगाणां वानराणां कराकृष्टया हस्ताकर्षणेन वा निष्कास्यमानाः बहिः क्रियमाणाः प्रवेश्यमानाः अन्तःप्रवेशं कार्यमाणाश्च जरन्तः वृद्धा नेत्रविहीनाः तापसास्तपोधना यत्र तम्। इभकलभानां हस्तिपोतानाम् अर्धोपभुक्तानि च तानि पतितानि तैः सरस्वत्या भुजलताभ्यां विगलितैः स्रस्तैः शङ्खवलयैः कम्बुकटकैरिव मृणालशकलैः बिसखण्डैः

मानविविधकन्दमूलम्, अम्बुपूर्णपुष्करपुटैर्वनकरिभिरापूर्यमाणविट-पालवालकम्, ऋषिकुमाराकृष्यमाणवनवराहदंष्ट्रान्तराललग्नशालूकम्, उपजातपरिचयैः कलापिभिः पक्षपुटवनसंधुक्ष्यमाणमुनिहोमहुताशनम्, आरब्धामृतचरुचारुगन्धम्, अर्धपक्वपुरोडाशपरिमलामोदितम्, अविच्छिन्नाज्यधाराहुतिहुतभुग्झङ्कारमुखरितम्, उपचर्यमाणातिथिवर्गम्, पूज्यमानपितृदैवतम्, अर्च्यमानहरिहरपितामहम्, उद्दिश्यमानश्राद्धकल्पम्, व्याख्यायमानयज्ञविद्यम्, आलोच्यमानधर्मशास्त्रम्, वाच्यमानविविधपुस्तकम्, विचार्यमाणसकलशास्त्रार्थम्, आरभ्यमाणपर्णशालम्, उपलिप्यमानाजिरम्, उपमृज्यमानोटजाभ्यन्तरम्, आबध्यमानध्यानम्, साध्यमानमन्त्रम्, अभ्यस्य-

---

कल्माषितं चित्रितम्। ऋषिजनार्थं मुनिभ्यः एणकैर्हरिणैः विषाणशिखरैः शृङ्गप्रान्तैरुत्खन्यमानानि विविधानि कन्दमूलानि यत्र तम्। अम्बुना जलेन पूर्णानि पुष्करपुटानि शुण्डाग्राणि येषां तैः वनकरिभिः आपूर्यमाणानि विटपानां पादपानाम् आलवालकानि आधारबन्धा यत्र तम्। ऋषिकुमारकैः मुनिपोतैः आकृष्यमाणानि निष्कास्यमानानि वनवराहाणामरण्यशूकराणां दंष्ट्रान्तराले लग्नानि शालूकानि उत्पलकन्दानि यत्र तम्। 'शालूकमेषां कन्दः स्यात्' इत्यमरः। उपजातः संजातः परिचयः संस्तवो येषां तैः कलापिभिः मयूरैः पक्षपुटानां पक्षतीनां पवनेन वायुना संधुक्ष्यमाणः प्रज्वाल्यमानो मुनीनां होमस्य हवनस्य हुताशनो वह्निर्यत्र तम्, आरब्धः यः अमृतचरुर्यवौदनस्तस्य चारुर्मनोहरो गन्धो यत्र तम्, अर्धपक्वः यः पुरोडाशः तस्य परिमलेन सुगन्धेन आमोदितम्। अविच्छिन्नया आज्यधारया सर्पिर्धारया याहुतिर्होमस्तया यो हुतभुग्झङ्कारोऽग्निशब्दस्तेन मुखरितं वाचालितम्, उपचर्यमाणः सेव्यमानः अतिथिवर्गो यत्र तम्। पूज्यमानानि पितृदैवतानि यत्र तम्, अर्च्यमाना वन्द्यमाना हरिर्विष्णुः, हर ईशानः, पितामहो ब्रह्मा एते यत्र तम्, उद्दिश्यमानः श्राद्धकल्पः श्राद्धप्रकारो विधिर्वा यत्र तम्, व्याख्यायमानार्थद्वारा निरूप्यमाणा यज्ञविद्या यागप्रतिपादिका विद्या यत्र तम्, आलोच्यमानानि विचार्यमाणानि धर्मशास्त्राणि यत्र तम्, वाच्यमानानि पठ्यमानानि विविधानि पुस्तकानि यत्र तम्, विचार्यमाणो निरूप्यमाणः सकलानां शास्त्राणामर्थस्तत्त्वं यत्र तम्, आरभ्यमाणा पर्णशाला यत्र तम्, उपलिप्यमानानि गोमयादिना लिप्यमानानि अजिराणि प्राङ्गणानि यत्र तम्, उपमृज्यमानं मार्जन्यादिना संमृज्यमानम् उटजाभ्यन्तरं यत्र तम्, साध्यमानो मन्त्रो गायत्र्यादिर्यत्र तम्, अभ्यस्यमानो योगः चित्तवृत्तिनिरोधाख्यो

मानयोगम्, उपहूयमानवनदेवताबलिम्, निर्वर्त्यमानमौञ्जमेखलम्, क्षाल्यमानवल्कलम्, उपसंगृह्यमाणसमिधम्, उपसंस्क्रियमाणकृष्णाजिनम्, गृह्यमाणगवेधुकम्, शोष्यमाणपुष्करबीजम्, ग्रथ्यमानाक्षमालम्, न्यस्यमानवेत्रदण्डम्, सत्क्रियमाणपरिव्राजकम्, आपूर्यमाणकमण्डलुम्, अदृष्टपूर्वं कलिकालस्य, अपरिचितमनृतस्य, (अश्रुतपूर्वमनङ्गस्य,) अब्जयोनिमिव त्रिभुवनवन्दितम्, असुरारिमिव प्रकटितनरहरिवराहरूपम्, सांख्यमिव कपिलाधिष्ठितम्, मधुरोपवनमिव बलावलीढदर्पितधेनुकम्, उदयनमिवानन्दितवत्सकुलम्, किंपुरुषाधिराज्यमिव मुनिजनगृहीतकलशाभिषिच्यमानद्रुमम्, निदाघसमयावसानमिव प्रत्यासन्नजलप्रपातम्, जलधर-

यत्र तम्, उपहूयमानः वनदेवतायै वनाधिष्ठात्र्यै बलिर्यत्र तम्, निर्वर्त्यमाना निष्पाद्यमाना मौञ्जमेखला यस्मिन् तम्। क्षाल्येति—क्षाल्यमानानि शोध्यमानानि वल्कलानि वृक्षत्वचो यत्र तम्, उपसंगृह्यमाणा राशीक्रियमाणाः समिध एधांसि यत्र तम्, उपसंस्क्रियमाणं छगणादिना शोध्यमानं कृष्णाजिनं रुरुचर्म यत्र तम्। गवेधुका तृणधान्यविशेषः। गवेधुका धान्यविशेषः कन्दो वा यस्मिन्। शोष्यमाणानि पुष्करबीजानि कमलफलानि यत्र तम्। ग्रथ्यमाना विरच्यमाना अक्षमाला यत्र तम्। न्यस्यमानाः संस्थाप्यमाना वेत्रदण्डा वेतसदण्डा यत्र तम्। सत्क्रियमाणाः परिव्राजकाः संन्यासिनो यत्र तम्। आपूर्यमाणानि कमण्डलूनि जलपात्राणि यत्र तम्। कलिकालस्य कलियुगस्य अदृष्टपूर्वमनालोकितपूर्वम्। अनृतस्य असत्यस्य। अनङ्गस्य कामस्य। अब्जयोनिः ब्रह्मा। असुरारिः विष्णुस्तमिव प्रकटितं नरहरेर्नृसिंहस्य वराहस्य शूकरस्य च रूपं येन तम्। आश्रमपक्षे—प्रकटितानि नराः पुरुषाः हरयो वानरा वराहाः शूकरा रूपाणि पशवश्च यत्र तम्। 'रूपं वाच्याकारे स्वभावे पशौ शब्दे' इति शब्दार्थ०। सांख्येति—सांख्यं कपिलमुनिविरचितं दर्शनं तदिव कपिलेन मुनिना अधिष्ठितम् आश्रितम् तद्विरचितत्वात्सांख्यदर्शनस्य। आश्रमपक्षे—कपिलया गवा कपिलाभिर्वा गोभिरधिष्ठितम्। मधुरा मथुरापुरी तस्या उपवनमिव बलेन बलरामेण अवलीढः समापितो दर्पितो धेनुकस्तन्नामासुरविशेषो यस्मिन्। आश्रमपक्षे तु—बलावलीढा बलयुक्ता दर्पिता धेनवो गावो यत्र तम्। उदयनेति—उदयनमिव तन्नामकराजविशेषमिव आनन्दितं वत्सकुलं येन तमिव। वत्सोऽत्र राजा पाण्डवकुलसमुद्भूतः॥ आश्रमपक्षे तु—वत्सस्तर्णकस्तत्कुलं समुदायः। किंपुरुषाः किंनराः। निदाघेति—निदाघसमयस्य ग्रीष्मकालस्यावसानमन्तमिव

समयमिव वनगहनमध्यसुखसुप्तहरिम्, हनूमन्तमिव शिलाशकलप्रहारसंचूर्णिताक्षास्थिसंचयम्, खाण्डवविनाशोद्यतार्जुनमिव प्रारब्धाग्निकार्यम्, सुरभिविलेपनधरमपि सतताविर्भूतहव्यधूमगन्धम्, मातङ्गकुलाध्यासितमपि पवित्रम्, उल्लसितधूमकेतुशतमपि प्रशान्तोपद्रवम्, परिपूर्णद्विजपतिमण्डलसनाथमपि सदा संनिहिततरुगहनान्धकारम्, अतिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम्।

यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदलीदलेषु न

---

प्रत्यासन्नः समीपस्थो जलप्रपातो जलवर्षणं यस्य। पक्षे—जलप्रपातो निर्झरः। जलधरेति–जलधरसमयमिव प्रावृट्कालमिव वनस्य जलस्य गहनं गभीरं यन्मध्यमभ्यन्तरप्रदेशस्तत्र सुखेन सुप्तः हरिर्नारायणो यत्र। पक्षे—वनस्य काननस्य गहनेषु, गह्वरेषु सुखेन सुप्ता हरयः सिंहा यत्र। प्रावृषि विष्णुः समुद्रे शेते इति प्रसिद्धिः। 'पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः। 'काननं वनम्' इत्यमरः। 'कलिलं गहनं समे' इत्यमरः। हनूमन्तमिव अञ्जनीसुतमिव शिलाशकलप्रहारेण चूर्णितः अक्षनाम्नो रावणपुत्रस्य अस्थ्नां संचयो येन स तम्। पक्षे—शिलाशकलप्रहारेण संचूर्णितो भग्नः अक्षाणां बिभीतकानां ( बहेड़ा इति भाषा ) अस्थिसंचयः (गुठली) यत्र तम्। खाण्डवस्य तन्नाम्ना प्रसिद्धस्य वनविशेषस्य विनाशाय उद्यतो योऽर्जुनः कुन्तीसुतस्तमिव प्रारब्धमग्निकार्यमग्निप्रज्वालनं येन। पक्षे—अग्निकार्यं होमः। इदानीं विरोधाभासालङ्कारप्रदर्शनपूर्वकमाश्रमं विशिनष्टि मातङ्गेति—मातङ्गकुलेन चाण्डालकुलेन अध्यासितमपि अधिष्ठितमपि पवित्रमिति विरोधः। चाण्डालस्य अपवित्रत्वात्। परिहारस्तु–मातङ्गकुलं हस्तिकुलम्। उल्लसितेति–उल्लसितं धूमकेतुशतं यत्र तथापि प्रशान्ता उपद्रवा यत्रेति विरोधः। एकस्यापि धूमकेतोरुत्पातस्य नक्षत्रविशेषस्योदये वा सति उपद्रवशतसंभवत्वात् किमुत तच्छतोदये। परिहारस्तु–धूमकेतुर्वह्निः। 'अग्न्युत्पातौ धूमकेतू' इत्यमरः। परिपूर्णस्य संपूर्णस्य द्विजपतेश्चन्द्रस्य मण्डलेन सनाथं सहितमपि सदा सर्वदा संनिहितः समीपस्थः तरुगहने वृक्षकानने अन्धकारो यत्रेति विरोधः। परिपूर्णेति–परिपूर्णा ज्ञानेन पूर्णा द्विजपतयो विप्रास्तेषां मण्डलेन सनाथमपि। अतिरमणीयमतिमनोहरमपरमिव ब्रह्मलोकं द्वितीयं ब्रह्मलोकमेवेत्यर्थः।

पुनरन्यथैवाश्रममाहात्म्यमुपवर्णयति–यत्रेति–यत्र च आश्रमे हविर्धूमेषु मलिनता मालिन्यं दृश्यते चरितेषु आश्रमवासिनामाचरणेषु न दृश्यते। तेषां सदा सदाचाररतत्वादित्यर्थः। मुखेति–मुखराग आननलौहित्यं शुकेषु कीरेषु भवति आश्रमवासिनां

मनःसु, चक्षूरागः कोकिलेषु न परकलत्रेषु, कण्ठग्रहः कमण्डलुषु न सुरतेषु, मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु, स्तनस्पर्शो होमधेनुषु न कामिनीषु, पक्षपातः कृकवाकुषु न विद्याविवादेषु, भ्रान्तिरनल-प्रदक्षिणासु न शास्त्रेषु, वसुसंकीर्तनं दिव्यकथासु न तृष्णासु, गणना रुद्राक्षवलयेषु न शरीरेषु, मुनिबालनाशः क्रतुदीक्षया न मृत्युना, रामानुरागो रामायणेन न यौवनेन, मुखभङ्गविकारो जरया न धनाभिमानेन । यत्र च महाभारते शकुनिवधः, पुराणे वायुप्रलपितम्, वयःपरिणामेन द्विजपतनम्, उपवनचन्दनेषु

---

कदापि मुखरागः कोपेषु क्रोधेषु न जायते । कुशाग्रेषु दर्भाग्रभागेषु तीक्ष्णता भवति परमाश्रमवासिनां स्वभावेषु तैक्ष्ण्यं न दृश्यते । चंचलेति–कदलीदलेषु रम्भापत्रेषु चंचलता दृश्यते न त्वाश्रमवासिनां मनःसु । चक्षुरिति–चक्षुषां नेत्राणां रागो लौहित्यं कोकिलेषु दृश्यते तेषां तत्स्वभावत्वादित्यर्थः परमाश्रमवासिनां चक्षूरागः चक्षुषो-रनुरागः परकलत्रेषु परस्त्रीषु न भवति । 'मातृवत्परदारेषु' इति शास्त्रश्रवणात् । आश्रमवासिनो हि परकलत्राणि मातृबुद्ध्या पश्यन्ति । पक्षेति–कृकवाकुषु कुक्कुटेषु पक्षपातः पक्षप्रपतनं दृश्यते, न तु आश्रमस्थानां कदापि विद्याविवादेषु पक्षपातो दृश्यते । शास्त्रचर्चासु तत्र न कोऽपि अन्यथा पक्षं गृह्णातीत्यर्थः । भ्रान्तिरिति–अनलप्रदक्षिणासु अग्निपरिक्रमासु भ्रान्तिर्भ्रमणं दृश्यते तत्राश्रमे, न तु शास्त्रेषु भ्रान्ति-र्मिथ्याज्ञानं कस्यापि दृश्यते । दिव्यकथासु दिवि भवानां नक्षत्रादीनां चर्चासु वसूनां गणदेवानां संकीर्तनं सम्यक् कथनं भवति, न तु तृष्णासु अभिलाषातिशयेषु वसुनो धनस्य संकीर्तनं जायते । रुद्राक्षवलयेषु रुद्राक्षजपमालासु गणना संख्या जायते, गायत्र्यादिजपार्थं रुद्राक्षमालासु गणना भवति, न तु शरीरेषु गणना आस्था भवत्या-श्रमस्थानाम् । तेषां शरीरं प्रति निस्पृहत्वात् । मुनीनां बालानां केशानां नाशः कर्तनं क्रतुदीक्षया यज्ञनियमानुसारं भवति, न तु मृत्युना मुनिबालानामृषिबालकानां नाशो मरणं भवति । न तत्राश्रमे अकालमृत्युः प्रभवति सर्वेषां पुरुषायुषजीवित्वादित्यर्थः । रामेति–रामानुरागो रामे रामचन्द्रे रामायणेन वाल्मीकिकृतकाव्येन अनुरागो भक्ति-र्भवति, न तु आश्रमस्थानां यौवनेन तारुण्येन रामासु स्त्रीषु अनुराग आसक्तिर्भवति । तत्राश्रमे जरया वार्धक्येन मुखभङ्गविकारो भवति, न धनस्य वसुनः अभिमानेन कस्यापि मुखभङ्गः विकृतिर्जायते । यत्रेति–यत्र च जाबाल्याश्रमे महाभारते महा-भारतकथायां शकुनेर्दुर्योधनमातुलस्य वधो हिंसनं श्रूयते, न तु आश्रमे शकुनीनां खगानां वधो मारणं केनापि क्रियते । पुराणे वायुपुराणे वायोस्तन्नामकदेवस्य प्रलपितं

जाड्यम्, अग्नीनां भूतिमत्त्वम्, एणकानां गीतश्रवणव्यसनम्, शिखण्डिनां नृत्यपक्षपातः, भुजङ्गमानां भोगः, कपीनां श्रीफलाभिलाषः, मूलानामधोगतिः।

## जाबालिवर्णनम्

तस्य चैवंविधस्य मध्यभागमण्डलमलंकुर्वाणस्यालक्तलोहितपल्लवस्य मुनिजनालम्बितकृष्णाजिनजलकरकसनाथशाखस्य तापसकुमारिकाभिरालवालदत्तपीतपिष्टपञ्चाङ्गुलस्य हरिणशिशुभिः पीयमानालवालकसलिलस्य मुनिकुमारकाबद्धकुशचीरदाम्नो हरि-

---

जल्पितं न तु तत्राश्रमे वायुना वायुविकारेण प्रलपितं प्रलापो भवति कस्यापि। उपवनमुद्यानं तत्स्थचन्दनद्रुमेषु जाड्यं शैत्यं दृश्यते, न तु आश्रमस्थस्य कस्यापि जाड्यं प्रज्ञाहीनत्वं दृश्यते। अग्नीनां वह्नीनां भूतिमत्त्वं भस्मवत्त्वं दृश्यते, न तु मुनीनां संपद्वत्त्वं दृश्यते। 'भूतिर्भस्मनि संपदि' इत्यमरः। एणकानां मृगीणां गीतानां श्रवणस्याकर्णनस्य व्यसनमासक्तिर्भवति, न तु तत्रत्यमुनीनां तच्छ्रवणाभिलाषो दृश्यते। शिखण्डीति—शिखण्डिनां मयूराणां नृत्ये ताण्डवे पक्षपातः छदपतनं, न तु मुनीनां नर्तनविषयकः पक्षपातोऽङ्गीकारः। भुजङ्गमानां सर्पाणां भोगः फणा, न तु मुनीनां भोगः स्त्र्यादिजनितं सुखम्। कपीनां वानराणां श्रीफलस्य बिल्वफलस्य अभिलाषो वाञ्छा, न तु मुनीनां श्रीफलस्य लक्ष्मीजनितस्य गृहापणादिकस्य अभिलाषः। मूलानां जटानां अधोगतिर्नीचैर्गमनं, न तु मुनीनां नरकपातः। वयसः आयुषः परिणामेन वार्धक्येनेत्यर्थः द्विजानां दन्तानां पतनं दृश्यते, न तु दुष्कर्मणा कस्यापि द्विजस्य पतनमधोगतिर्भवति।

तस्येति—एवंविधस्य पूर्वोक्तप्रकारेण वर्णितस्य तस्याश्रमस्य मध्यभागमलङ्कुर्वाणस्य रक्ताशोकतरोरधश्छायामुपविष्टं विषण्णं भगवन्तं जाबालिमपश्यमिति दूरेणान्वयः। जाबालिं वर्णयति। तत्र षष्ठ्यन्तानि विशेषणानि तरोः द्वितीयान्तानि च मुनेर्विशेषणानीति स्वयमूहनीयम्। अलक्तेति—अलक्तवत् यावकवत् लोहिता रक्ताः पल्लवा यस्य तस्य। मुनिजनैस्तापसैरालम्बिताः स्थापिताः कृष्णाजिनानि कृष्णमृगचर्माणि जलकरकाः जलपूर्णाः कमण्डलवश्च तैः सनाथाः सहिताः शाखा यस्य तस्य। 'कमण्डलौ च करकः' इत्यमरः। तापसेति—तापसकुमारिकाभिः मुनिकन्याभिः आलवालेषु आधारबन्धेषु दत्ता निहिता पीतपिष्टस्य हरिद्रामिश्रिततण्डुलचूर्णस्य पञ्चाङ्गुलयो यत्र तस्य। हरिणशिशुभिः मृगपोतैः पीयमानं निपीयमानमालवालके सलिलं जलं यस्य तस्य। मुनीति—मुनिकुमारकैराबद्धानि कुशचीरदामानि

तगोमयोपलेपनविविक्ततलस्य तत्क्षणकृतकुसुमोपहाररमणीयस्य नातिमहतः परिमण्डलतया विस्तीर्णावकाशस्य रक्ताशोकतरोरधश्छायायामुपविष्टम्, उग्रतपोभिर्भुवनमिव सागरैः कनकगिरिमिव कुलपर्वतैः क्रतुमिव वैतानिकवह्निभिः कल्पान्तदिवसमिव रविभिः कालमिव कल्पैः समन्तान्महर्षिभिः परिवृतम्, उग्रशापकम्पितदेहया प्रणयिन्येव विहितकेशग्रहया क्रुद्धयेव कृतभ्रूभङ्गया मत्तयेवाकुलितगमनया प्रसाधितयेव प्रकटिततिलकया जरया गृहीतव्रतयेव भस्मधवलया धवलीकृतविग्रहम्, आयामिनीभिः पलितपाण्डुराभिस्तपसा विजित्य मुनिजनमखिलं धर्मपताकाभिरिवोच्छ्रिताभिरमरलोकमारोढुं पुण्यरज्जुभिरिवोपसंगृहीताभिरतिदूरप्रवृ-

---

यत्र तस्य। हरितेति—हरितमशुष्कं यद् गोमयं तेन यदुपलेपनं तेन विविक्तं पूतं तलमधोभागो यस्य। तत्क्षण एव तस्मिन्नेव काले कृतो विहितो यः कुसुमोपहारः पुष्पाविकिरणं तेन रमणीयस्य मनोहरस्य नातिमहतो नातिदीर्घस्य परिमण्डलतया समन्तात् परिमाणं परिमण्डलं तस्य भावस्तत्ता तया विस्तीर्णः सुविस्तृतः अवकाशोऽन्तरं यस्य तस्य। उग्रेति—उग्रतपोभिः कृच्छ्रचान्द्रायणादिव्रतैः कठोरं तपो येषां तैः महर्षिभिः समन्तात् परिवृतं परिवेष्टितम्। कैः कमिवेत्याह—भुवनेति—सागरैः समुद्रैः भुवनमिव। कुलपर्वतैः कुलाचलैः कनकगिरिमिव सुवर्णाद्रिमिव। वैतानिकवह्निभिः दक्षिणाग्निगार्हपत्याहवनीयैः क्रतुमिव यज्ञमिव। रविभिः सूर्यैः कल्पान्तदिवसमिव युगान्तवासरमिव। कल्पैः कालावयवैः कालमिव समयमिव। उग्रेति–जरया वार्धक्येन धवलीकृतः सितीकृतः विग्रहः शरीरं यस्य तम्। जराया विशेषणान्याह–उग्रेति–उग्रः कठोरः यः शापो जाबालेः आक्रोशस्तेन कम्पितश्चालितो देहो यस्याः सा तया। प्रणयिन्या इव मनस्विन्या इव विहितः कृतः केशग्रहो यया तया। यथा प्रणयिनी स्ववल्लभं केशग्राहं गृह्णाति तद्वदेव जरयापि अस्य मुनेः केशा गृहीताः सन्ति। कृतः भ्रुवोर्भङ्गः भ्रूभङ्गो यया तया। क्रुद्धया कुपितया इव कृतभ्रूभङ्गया। क्रुद्धा यथा भ्रूभङ्गमाचरति, तद्वदेव जरया करणेन अस्यापि मुनेः भ्रूभङ्गो जातः। मत्तया प्रमत्तया इव आकुलितं गमनं यस्यास्तया। सुरापानादिना मत्ताया यथा गतिः पदे पदे स्खलति तद्वदेव जरयापि पुरुषस्य गतिः स्खलति। प्रसाधितया इव भूषितया इव प्रकटितमाविष्कृतं तिलकं यया तया। यथा भूषिता स्त्री सतिलका भवति, तथैव जरयापि देहे तिलकाः ( 'तिल' इति भाषायाम् ) प्रजायन्ते। गृहीतं व्रतं यया तया भस्मधवलया भस्मना भस्मधारणेन धवलया सितया। यथा गृहीतव्रता

द्धस्य पुण्यतरोः कुसुममञ्जरीभिरिवोद्गताभिर्जटाभिरुपशोभितम्, उपरचितभस्मत्रिपुण्ड्रकेण तिर्यक्प्रवृत्तत्रिपथगास्रोतस्त्रयेण हिमगिरिशिलातलेनेव ललाटफलकेनोपेतम्, अधोमुखचन्द्रकलाकाराभ्यामवलम्बितवलिशिथिलाभ्यां भ्रूलताभ्यामवष्टभ्यमानदृष्टिम्, अनवरतमन्त्राक्षराभ्यासविवृताधरपुटतया निष्पतद्भिरतिशुचिभिः सत्यप्ररोहैरिव स्वच्छेन्द्रियवृत्तिभिरिव करुणारसप्रवाहैरिव दशनमयूखैर्धवलितपुरोभागम्, उद्वमदमलगङ्गाप्रवाहमिव जह्नुम्, अनवरतसोमोद्गारसुगन्धिनिश्वासावकृष्टैर्मूर्तिमद्भिः शापाक्षरैरिव सदा मुखभागसंनिहितैः परिस्फुरद्भिरलिभिरविरहितम्, अति-

---

स्त्री भस्मधारणेन धवला भवति तथैव इयं जरापि भस्मवत् धवला शुभ्रा वर्तते । अथ जरां विशिनष्टि—आयामिनीभिः विस्तारवतीभिः पलितं केशेषु जराजनिता शुक्लता तया पाण्डुराभिः सिताभिः । तपसा अखिलं निखिलं मुनिजनं मुनिवर्गं विजित्य धर्मपताकाभिः धर्मस्य पताकाभिरिव विजयवैजयन्तीभिरिव उच्छ्रिताभिरूर्ध्वं स्थापिताभिः । अथवा अमरलोकं स्वर्लोकमारोढुं पुण्यरज्जुभिः पवित्रगुणैः इव उपसंगृहीताभिः समाहृताभिः । अतिदूरप्रवृद्धस्य सुदूरं वृद्धिं गतस्य पुण्यतरोः श्रेयोवृक्षस्य उद्गताभिः प्रादुर्भूताभिः कुसुममञ्जरीभिः पुष्पवल्लरीभिरिव । जटाभिः सटाभिः उपशोभितमलंकृतम् । उपरचितानि कृतानि भस्मना भूत्या त्रीणि पुण्ड्राणि रेखामयतिलकानि यस्मिन् तेन । तिर्यक् प्रवृत्तम् एकमुपरि एकं तिर्यक् एकमधः प्रवृत्तं त्रिपथगाया गङ्गायाः स्रोतस्त्रयं यत्रैवंभूतं यत् हिमगिरेर्हिमालयस्य शिलातलं तेनेव ललाटफलकेन ललाटरूपकाष्ठपट्टेन उपेतं युक्तम् । 'भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि' इत्यमरः । अधोमुखेति—अधोमुखी अवाङ्मुखी या चन्द्रकला तद्वत् आकारो रूपं ययोस्ताभ्याम् । अवलम्बिता वार्धक्येन आश्रिता या वलयस्तिस्रो मध्यमरेखास्ताभिः शिथिलाभ्याम् । दशनमयूखैः दन्तकिरणैर्धवलितः सितीकृतः पुरोभागो यस्य तम् । अनवरतमनारतं गायत्र्यादिमन्त्राणामक्षराणामभ्यासेनावृत्त्या विवृताधरपुटतया व्यात्तोष्ठपुटत्वेन निष्पतद्भिर्निर्गच्छद्भिरतिशुचिभिरत्युज्ज्वलैरतिपवित्रैर्वा सत्यप्ररोहैः सत्याङ्कुरैः इव, स्वच्छा निर्दोषा या इन्द्रियवृत्तय इन्द्रियव्यापाराः ताभिरिव करुणारसस्य प्रवाहैरिव । अर्थात् अत्युज्ज्वला ये दशनकिरणाः स्मितादिकाले बहिर्निर्गच्छन्ति ते मन्ये सत्याङ्कुरादय एव सन्तीत्युत्प्रेक्ष्यते । उद्वमन् निर्गच्छन् अमलो निर्मलो गङ्गाप्रवाहो यस्मात् तं जह्नुमिव स्थितमित्युपमीयते । सदा सर्वदा मुखभागे संनिहितैः संनिकृष्टैः परिस्फुरद्भिः अलिभिः भ्रमरैः अविरहितमवियुक्तमाननं मुखमाद-

कृशतया निम्नतरगण्डगर्तमुन्नततरहनुघोणमाकरालतारकमवशीर्यमाणविरलनयनपक्ष्ममालमुद्गतदीर्घरोमरुद्धश्रवणविवरमानाभिलम्बकूर्चकलापमाननमादधानम्, अतिचपलानामिन्द्रियाश्वानामन्तःसंयमनरज्जुभिरिवाततताभिः कण्ठनाडीभिर्निरन्तरावनद्धकन्धरं समुन्नतविरलास्थिपञ्जरमंसावलम्बियज्ञोपवीतं वायुवशजनिततनुतरंगभङ्गमुत्प्लवमानमृणालमिव मन्दाकिनीप्रवाहमकलुषमङ्गमुद्वहन्तम्, अमलस्फटिकशकलघटितमक्षवलयमत्युज्ज्वलस्थूलमुक्ताफलग्रथितं सरस्वतीहारमिव चलदङ्गुलिविवरगतमावर्तयन्तम्, अनवरतभ्रमिततारकाचक्रमपरमिव ध्रुवम्, उन्नमता शिराजालकेन जरत्कल्पतरुमिव परिणतलतासंचयेन निरन्तरनिचितम्, अमलेन

---

धानं धारयन्तम् । अलीनुत्प्रेक्षते—अनवरतमनारतं यः सोमोद्गारः सोमरसोद्गारस्तेन सुगन्धिर्यो निश्वासः तेनाकृष्टैः मूर्तिमद्भिराकारवद्भिः शापाक्षरैरिव । अर्थात् सुगन्धिनिश्वासाकृष्टा ये अलयस्ते वस्तुतः शापाक्षराण्येव सन्ति । अतिकृशतया अत्यर्थं कृशत्वेन निम्नतरो गभीरतरो गण्डगर्तः कपोलतः परो भागो यस्य तदाननम् । हनु चिबुकं घोणा नासिका । आकराला ईषद्वक्रा तारका कनीनिका यस्मिन् तत् । अवशीर्यमाणा क्षीयमाणा विरला अनिबिडा च नयनयोर्नेत्रयोः पक्ष्ममाला रोमराजिर्यस्मिन् तत्, उद्गतैर्निर्गतैर्दीर्घै रोमभिः रुद्धमवरुद्धं श्रवणयोः श्रोत्रयोर्विवरं रन्ध्रं यस्य तत् । अतिचपलानामत्यन्तचञ्चलानाम् इन्द्रियाश्वानामक्षवाजिनामन्तःसंयमनरज्जुभिरिव नियन्त्रणरश्मिभिरिव आतताभिः अतिविस्तृताभिः कण्ठनाडीभिर्गलस्नायुभिः निरन्तरमविच्छिन्नमवनद्धा संनद्धा कन्धरा ग्रीवा यस्मिन् । समुन्नतमुच्चं विरलं सान्तरम् अस्थिपञ्जरं कङ्कालं यत्र तत् । अंसावलम्बि भुजशिरोऽवलम्बि यज्ञोपवीतं यस्मिंस्तत् । वायुवशेन पवनकारणेन जनिता उत्पादितास्तनवः सूक्ष्मास्तरङ्गभङ्गा कल्लोलविघटनानि यस्मिंस्तत् । अत एव उत्प्लवमानानि मृणालानि बिसानि यस्मिन्नीदृशं मन्दाकिनीप्रवाहं भागीरथीप्रवाहमिव अकलुषं स्वच्छम् । पुनः किं कुर्वन्तं जाबालिम् । अमलैर्विशदैः स्फटिकशकलैः स्फटिकमणिखण्डैर्घटितं निर्मितम् अत्युज्ज्वलैरतिशुभ्रैः स्थूलैर्मुक्ताफलैर्मौक्तिकैर्ग्रथितं गुंफितं सरस्वत्या वाग्देव्या हारमिव, चलन्तीनामङ्गुलीनां विवरेषु रन्ध्रेषु गतं प्राप्तमक्षवलयं रुद्राक्षमालामावर्तयन्तं परिवर्तयन्तम् । रुद्राक्षमालया जपन्तमित्यर्थः । अनवरतमनारतं भ्रमितं पर्य्यटितं तारकाचक्रं यत्रैवंविधमपरं द्वितीयं ध्रुवमिव । उन्नमतोपरि स्फुरता शिराजालकेन धमनीनां समूहेन निरन्तरं निचितं व्याप्तम् । केन कमिवेत्याह—परिणतानां पक्वानां

चन्द्रांशुभिरिवामृतफेनैरिव गुणसंतानतन्तुभिरिव निर्मितेन मानससरोजलक्षालितशुचिना दुकूलवल्कलेनाद्वितीयेनेव जराजालकेन संछादितम्, आसन्नवर्तिना मन्दाकिनीसलिलपूर्णेन त्रिदण्डोपविष्टेन स्फाटिककमण्डलुना विकचपुण्डरीकराशिमिव राजहंसेनोपशोभमानम्, स्थैर्येणाचलानां गाम्भीर्येण सागराणां तेजसा सवितुः प्रशमेन तुषाररश्मेर्निर्मलतयाम्बरतलस्य संविभागमिव कुर्वाणम्, वैनतेयमिव स्वप्रभावोपात्तद्विजाधिपत्यम्, कमलासनमिवाश्रमगुरुम्, जरच्चन्दनतरुमिव भुजंगनिर्मोकधवलजटाकुलम्, प्रशस्तवारणपतिमिव प्रलम्बकर्णवालम्, बृहस्पतिमिवाजन्मसंवर्धितकचम्, दिवसमिवोद्यदर्कबिम्बभास्वरमुखम्, शरत्कालमिव

---

लतानां संचयेन समूहेन जरन् पुराणो यः कल्पतरुस्तमिव। दुकूलवल्केन दुकूलसदृशेन वल्कलेन संछादितम्। अमलेन स्वच्छेन चन्द्रांशुभिरिव चन्द्रकिरणैरिव निर्मितेन रचितेन, अमृतफेनैरिव पीयूषडिण्डीरैरिव निर्मितेन, गुणानां विद्यातपश्चरणादीनां संतानाः समूहा एव तन्तवस्तैरिव निर्मितेन। मानससरसि जातेन जलेनेत्यर्थस्तेन यत् क्षालनं धावनं तेन शुचिना पवित्रेण। द्वितीयेनापरेण जराजालकेनेवाच्छादितम्। आसन्नवर्तिना निकटस्थेन, मन्दाकिन्या भागीरथ्याः सलिलेन पूर्णेन भृतेन त्रिदण्डोपविष्टेन त्रिपादिकास्थितेन स्फाटिककमण्डलुना स्फटिकमणिनिर्मितजलपात्रेण उपशोभमानं भासमानम्। केन कमिव—राजहंसेन विकचानां विकसितानां पुण्डरीकाणां श्वेतकमलानां राशिमिव। स्थैर्येण स्थिरतया अचलानां पर्वतानां, गाम्भीर्येण गभीरतया सागराणां, तेजसा सवितुः सूर्यस्य, प्रशमेन शान्त्या तुषाररश्मेश्चन्द्रमसः, निर्मलतया अम्बरतलस्याकाशस्य संविभागमिव संविभजनमिव (स्वकीयवस्तुनः किंचित् किंचिदादाय परेभ्यः प्रदानं संविभागः) कुर्वाणम्। पुनस्तमेव श्लेषद्वारा विशेषयन्नाह—वैनतेयेति—वैनतेयमिव गरुडमिव स्थितं तमहमपश्यम्। कीदृशं वैनतेयमित्याह—स्वप्रभावेण स्वमहिम्ना उपात्तमाप्तं द्विजानां खगानामाधिपत्यं प्रभुत्वं येन तमिव। मुनिपक्षे—स्वमहिम्नाऽवाप्तं द्विजानां विप्राणामाधिपत्यं येनेति। कमलासनमिव ब्रह्माणमिव, आश्रमगुरुम्। जरन् पुराणो यश्चन्दनतरुः तमिव भुजङ्गानां सर्पाणां निर्मोकाः कञ्चुका एव धवलाः शुभ्रा जटाः सटास्ताभिः आकुलं व्याप्तम्। मुनिपक्षे—भुजङ्गनिर्मोकवत् धवलाभिर्जटाभिराकुलम्। 'समौ कञ्चुकनिर्मोकौ' इत्यमरः। प्रशस्त उत्तमो यो वारणपतिर्हस्तिपतिस्तमिव। बृहस्पतिमिव देवगुरुमिव। आजन्म जन्मप्रभृति संवर्धितः पोषितः कचः तन्नामा स्वपुत्रो येन तमिव। मुनिपक्षे—जन्मारभ्य संवर्धिताः कचाः केशा येन

क्षीणवर्षम्, शंतनुमिव प्रियसत्यव्रतम्, अम्बिकाकरतलमिव रुद्राक्षवलयग्रहणनिपुणम्, शिशिरसमयसूर्यमिव कृतोत्तरासङ्गम्, वडवानलमिव संततपयोभक्षम्, शून्यनगरमिव दीनानाथविपन्नशरणम्, पशुपतिमिव भस्मपाण्डुरोमाश्लिष्टशरीरं भगवन्तं जाबालिमपश्यम्।

## मुनिविषयको विचारः

अवलोक्य चाहमचिन्तयम्—'अहो प्रभावस्तपसाम्। इयमस्य शान्तापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरन्ती सौदामिनीव चक्षुषः प्रतिहन्ति तेजांसि। सततमुदासीनापि महाप्रभावतया भयमिवोपजनयति प्रथमोपगतस्य। शुष्कनलकाशकुसुमनिपति-

---

तम्। दिवसमिव दिनमिव उद्यता उद्गच्छता अर्कबिम्बेन सूर्यबिम्बेन भास्वरं भासनशीलं मुखं प्रारम्भो यस्य तमिव। मुनिपक्षे—अर्कबिम्बवत् भासनशीलं मुखमाननमण्डलं यस्य तम्। शरदिति—शरत्कालमिव क्षीणा वर्षा यस्मिन् तमिव। पक्षे—क्षीणानि वर्षाणि हायनानि यस्य तं प्रवयसमित्यर्थः। शंतनुमिव भीष्मपितरमिव प्रियः सत्यव्रतो भीष्मो यस्य तमिव। पक्षे—प्रियं सत्यस्य व्रतं यस्य तम्। अम्बिकेति—अम्बिकायाः पार्वत्याः करतलमिव पाणितलमिव। रुद्राक्षं शिवेन्द्रियं लोचनमित्यर्थस्तदेव वलयं तद्ग्रहणे निपुणं चतुरम्। मुनिपक्षे—रुद्राक्षवलयं जयमाला तद्ग्रहणे तदावर्तने चतुरम्। शिशिरेति—शिशिरसमयस्य सूर्यमिव। कृतो विहित उत्तरस्या उदीच्या आसङ्गः संश्लेषो येन तमिव। पक्षे—उत्तरासङ्गः उत्तरीयवस्त्रम्। बडवानलं औरवस्तमिव। संततमनारतं पयोभक्षमम्भक्षम्। पक्षे—क्षीरभक्षम्। शून्येति—शून्यं नगरं तदिव। दीनानि अशोभनानि अनाथानि अप्रभूणि विपन्नानि विनष्टानि च शरणानि गृहाणि यत्र तत्। पक्षे—दीनानामनाथानां विपद्ग्रस्तानां च शरणं रक्षकम्। पशुपतीति—पशुपतिमिव शम्भुमिव। भस्मना भूत्या पाण्डुरै रोमभिराश्लिष्टं संसक्तं शरीरं यस्य तमिव। पक्षे—भस्मवत् पाण्डुरै रोमभिः।

जाबालिं निरीक्ष्य किं कृतवानित्याह—अवलोक्येति—अहो इत्याश्चर्ये। प्रभावो माहात्म्यम्। अस्य मुनेः इयं शान्तापि मूर्तिः शरीरमुत्तप्तं प्रकर्षेणोष्णीकृतं यत्कनकं सुवर्णं तद्वत् अवदाता उज्ज्वला परिस्फुरन्ती देदीप्यमाना सौदामिनी विद्युदिव चक्षुषः नयनस्य तेजांसि महांसि प्रतिहन्ति उपहन्ति। सततमुदासीनापि महाप्रभावतया अत्युग्रप्रतापत्वेन प्रथमोपगतस्य प्रथममुपगतस्य पुंसो भयमिवोद्वेगमिव जनयति।

तानलचटुलवृत्ति नित्यमसहिष्णु तपस्विनां तनुतपसामपि तेजः प्रकृत्या भवति। किमुत सकलभुवनतलवन्दितचरणानामनवरततपः-क्षपितमलानां करतलामलकवदखिलं जगदालोकयतां दिव्येन चक्षुषा भगवतामेवंविधानामघक्षयकारिणाम्। पुण्यानि हि नामग्रहणान्यपि महामुनीनाम्, किं पुनर्दर्शनानि। धन्यमिदमाश्रमपदमयमधिपतिर्यत्र। अथवा भुवनतलमेव धन्यमखिलमनेनाधिष्ठितमवनितलकमलयोनिना। पुण्यभाजः खल्वमी मुनयो यदहर्निशमेनमपरमिव नलिनासनमपगतान्यव्यापारा मुखावलोकननिश्चलदृष्टयः पुण्याः कथाः शृण्वन्तः समुपासते। सरस्वत्यपि धन्या यास्य तु सततमतिप्रसन्ने करुणाजलनिस्यन्दिन्यगाधगाम्भीर्ये रुचिरद्विजपरिवारा मुखकमलसंपर्कमनुभवन्ती निवसति हंसीव मानसे। चतुर्मुखकमलवासिभिश्चतुर्वेदैः सुचिरादिदमपरमुचितमासादितं स्थानम्। एनमासाद्य शरत्कालमिव कलिजलदसमयकलुषिताः प्रसादमुपगताः पुनरपि जगति सरित इव सर्वविद्याः। नियतमिह

---

शुष्केति—तनु स्वल्पं तपो येषां तेषामपि तपस्विनां तेजः प्रतापः प्रकृत्या स्वभावेन नित्यं सततमसहिष्णु न सोढुं योग्यं भवति। कीदृक् तेजः—शुष्कानि यानि नलकाशकुसुमानि तेषु निपतितो योऽनलो वह्निस्तद्वत् चटुला चंचला वृत्तिर्यस्य तत्। किमुतेति—सकलेति—सकलेन भुवनेन लोकेन वन्दितानि नमस्कृतानि चरणानि येषां तेषाम्, अनवरतं सततं तपसा तपश्चरणेन क्षपितानि नाशितानि मलानि पापानि येषां तेषाम्, दिव्येन चक्षुषा ज्ञानलोचनेन अखिलं जगत् करतले पाणौ स्थितमामलकं धात्रीफलं तद्वत् आलोकयतां पश्यतामघक्षयकारिणां पापविनाशकर्तॄणामेवंविधानां पूर्वोक्तगुणविशिष्टानां जाबाल्यादीनां मुनीनां तु किमुत कैव कथा तेजसोऽसह्यत्वस्य। पुण्यानि पुण्यजनकानि। अथवा अवनितलकमलयोनिना भुवनतलब्रह्मणानेन जाबालिना अधिष्ठितमध्यासितमिदं सकलं भुवनतलमेव धन्यं कृतपुण्यमित्यर्थः। 'सुकृती पुण्यवान् धन्यः' इत्यमरः। पुण्येति—खलु निश्चयेन। पुण्यभाजः सुकृतभाजः। यदिति हेत्वर्थे। अपरं द्वितीयं नलिनासनं ब्रह्माणमिव। मुखावलोकने जाबालेराननावलोकने निश्चला निमेषरहिता दृष्टयो लोचनानि येषां ते तथाविधाः सन्तः पुण्याः पवित्राः कथाः शृण्वन्तः अहर्निशमहोरात्रं समुपासते सेवन्ते। रुचिराः सुन्दराः द्विजा ब्राह्मणा एव परिवारो यस्याः सा। कस्मिन् केवेत्याह—द्विजाः पक्षिणः। अतिप्रसन्ने अतिशयनिर्मले। मानसे मानसाख्ये सरोवरे। चतुर्मुखेति—एनमिति सरितो नद्यः।

सर्वात्मना कृतावस्थितिना भगवता परिभूतकलिकालविलसितेन धर्मेण न स्मर्यते कृतयुगस्य । धरणितलमनेनाधिष्ठितमालोक्य न वहति नूनमिदानीं सप्तर्षिमण्डलनिवासाभिमानमम्बरतलम् । अहो महासत्त्वेयं जरा यास्य प्रलयरविरश्मिनिकरदुर्निरीक्ष्ये रजनिकरकिरणपाण्डुशिरोरुहे जटाभारे फेनपुञ्जधवला गङ्गेव पशुपतेः क्षीराहुतिरिव शिखाकलापे विभावसोर्निपतन्ती न भीता । बहलाज्यधूमपटलमलिनीकृताश्रमस्य भगवतः प्रभावाद्भीतमिव रविकिरणजालमपि दूरतः परिहरति तपोवनम् । एते च पवनलोलपुञ्जीकृतशिखाकलापा रचिताञ्जलय इवात्र मन्त्रपूतानि हवींषि गृह्णन्त्येतत्प्रीत्याशुशुक्षणयः । तरलितदुकूलवल्कलोऽयं चाश्रमलताकुसुमसुरभिपरिमलो मन्दमन्दचारी सशङ्क इवास्य समीपमुपसर्पति गन्धवाहः । प्रायो महाभूतानामपि दुरभिभवानि भवन्ति तेजांसि । सर्वतेजस्विनामयं चाग्रणीः । द्विसूर्यमिवाभाति

---

प्रसादो नैर्मल्यम् । नियतेति—नियतं निश्चयेन । कृतयुगस्य सत्ययुगस्य । धरणीति—नूनं निश्चयेन । अम्बतरलं गगनतलम् । अहो इति विषादे धिगर्थे वा । जरा वार्धक्यम् । महासत्त्वा महाप्रबला । रविः सूर्यः । रश्मिनिकरवत् किरणसमूहवत् । रजनिकरस्य चन्द्रमसः । पाण्डवः श्वेताः । शिरोरुहाः केशाः । चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः' इत्यमरः । पशुपतेः शिवस्य । विभवासोरग्नेः शिखाकलापज्वालासमूहे निपतन्ती क्षीराहुतिरिव दुग्धाहुतिरिव । प्रलयेति विशेषणं रजनीति विशेषणं च पशुपतेर्जटाभारस्यापि योज्यम् । प्रलयेति विशेषणं विभावसोः शिखाकलापस्यापि योज्यम् । बहलेति—बहलेन बहुलेन 'बहलं बहुलं बहु' इत्यमरः । आज्यधूमपटलेन सर्पिर्धूमसमूहेन मलिनीकृतः आश्रमो यस्यैवंविधस्य भगवतो मुनेः इत्यादि । एते च आशुशुक्षणयः वह्नयः रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः । 'हिरण्यरेता हुतभुग् दहनो हव्यवाहनः' इत्यमरः । मन्त्रपूतानि मन्त्रैः पवित्राणि । पवनेन वायुना लोलश्चपलः शिखाकलापः ज्वालासमूहो येषां ते, अत एव रचिताञ्जलय इव । तरलितेति—तरलितानि कम्पितानि दुकूलवल्कलानि येन सः । आश्रमलतानां सुरभिः परिमलो यत्र अत एव मन्दमन्दचारी अयं गन्धवाहः पवनश्च अस्य मुनेः समीपं सशङ्को भीत इव प्रवहति । 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे', 'सुरभिर्घ्राणतर्पणः' इति चामरः । प्राय इति—प्रायः बाहुल्येन 'प्रायो बाहुल्येऽव्ययम्' । महाभूतानां पृथ्व्यादीनामपि तेजांसि धामानि दुरभिभवानि दुःखेनाभिभवितुं शक्यानि भवन्ति ।

जगदनेनाधिष्ठितं महात्मना । निष्कम्पेव क्षितिरेतदवष्टम्भात् । एष प्रवाहः करुणारसस्य, संतरणसेतुः संसारसिन्धोः, आधारः क्षमाम्भसाम्, परशुस्तृष्णालतागहनस्य, सागरः संतोषामृतरसस्य, उपदेष्टा सिद्धिमार्गस्य, अस्तगिरिरसद्ग्रहस्य, मूलमुपशमतरोः, नाभिः प्रज्ञाचक्रस्य, स्थितिवंशो धर्मध्वजस्य, तीर्थं सर्वविद्यावताराणाम्, वडवानलो लोभार्णवस्य, निकषोपलः शास्त्ररत्नानाम्, दावानलो रागपल्लवस्य, मन्त्रः क्रोधभुजंगस्य, दिवसकरो मोहान्धकारस्य, अर्गलाबन्धो नरकद्वाराणाम्, कुलभुवनमाचाराणाम्, आयतनं मङ्गलानाम्, अभूमिर्मदविकाराणाम्, दर्शकः सत्पथानाम्, उत्पत्तिः साधुतायाः, नेमिरुत्साहचक्रस्य, आश्रयः सत्त्वस्य, प्रतिपक्षः कलिकालस्य, कोशस्तपसः, सखा सत्यस्य, क्षेत्रमार्ज-

---

अयं च जाबालिः सर्वतेजस्विनामग्रणीः प्रष्ठो वर्तते । अनेन महात्मना अधिष्ठितमिदं जगत् द्विसूर्यमिव द्वौ सूर्यौ यस्मिंस्तत् इव प्रतीयते । अवष्टम्भात् अवलम्बनात् । क्षितिः पृथ्वी । करुणारसस्य करुणाजलस्य प्रवाह ओघः । संसार एव सिन्धुः सागरस्तस्य संतरणसेतुः संतरणार्थं सेतुबन्ध इव अस्ति । क्षमाम्भसां क्षान्तिसलिलानामयं जाबालिराधारः । तृष्णैव लता तद्गहनस्य परशुः कुठारोऽयम् । संतोष एवामृतरसः तस्य सागरः । सिद्धिमार्गस्य मोक्षपदव्या अयमुपदेष्टा । असद्ग्रहस्य अशुभग्रहस्यायमस्तगिरिरस्ताचलो वर्तते । उपशमो मानसी शान्तिः स एव तरुर्वृक्षस्तस्य मूलम् । प्रज्ञाचक्रस्य बुद्धिचक्रस्य । धर्मध्वजस्य सुकृतकेतोः स्थितिवंशः अवस्थानवेणुरयम् । सर्वविद्यावताराणां सर्वविद्याप्रवेशानां तीर्थं घट्टोऽयमस्ति । 'तीर्थं नद्यवतारप्रदेशे घट्टे' इति शब्दार्थ० । वडवेति—लोभ एवार्णवः सागरस्तस्य वडवानलः वाडवाग्निः, शास्त्ररत्नानामागममणीनां निकषोपलः कषणपट्टः (कसौटी) । राग आसक्तिरेव पत्रं तस्य दहनाय दावानलो वनवह्निः । क्रोध एव भुजङ्गः सर्पः तस्य वशीकरणायायं मन्त्रो वर्तते । मोह एवान्धकारस्तस्य वारणाय अयं दिवसकरः दिनकरो वर्तते । नरकद्वाराणां दुर्गतिद्वाराणामयमर्गलाबन्धः अवष्टम्भकं मुसलं वर्तते । 'कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना' इत्यमरः । आचाराणां कुलभवनं मूलगृहम् । आयतनं निकेतनम् । मदविकाराणाम् अहंकारवृत्तीनामभूमिरपात्रम् । सत्पथानां सन्मार्गाणाम् । उत्साहोऽध्यवसायः स एव चक्रं रथाङ्गं तस्य नेमिः प्रधिः । 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्' इत्यमरः । उत्साहोऽध्यवसायः स्यात् सवीर्यमतिशक्तिभाक्' इत्यमरः । सत्त्वस्य सत्त्वगुणस्याश्रय आधारः । 'प्रीत्यात्मकः प्रकृतेर्गुणविशेषः सत्त्वः'

वस्य, प्रभवः पुण्यसंचयस्य, अदत्तावकाशो मत्सरस्य, अरातिर्विपत्तेः, अस्थानं परिभूतेः, अननुकूलोऽभिमानस्य, असंमतो दैन्यस्य, अनायत्तो रोषस्य, अनभिमुखः सुखानाम् । अस्य भगवतः प्रसादादेवोपशान्तवैरमपगतमत्सरं तपोवनम् । अहो प्रभावो महात्मनाम् । अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तात्मानस्तिर्यञ्चोऽपि तपोवनवसतिसुखमनुभवन्ति । तथा हि एष विकचोत्पलवनरचनानुकारिणमुत्पतच्चारुचन्द्रकशतं हरिणलोचनद्युतिशबलमभिनवशाद्वलमिव विशति शिखिनः कलापमातपाहतो निःशङ्कमहिः । अयमुत्सृज्य मातरमजातकेसरैः केसरिशिशुभिः सहोपजातपरिचयः क्षरत्क्षीरधारं पिबति कुरङ्गशावकः सिंहीस्तनम् । एष मृणालकलापाशङ्किभिः शशिकरधवलं सटाभारमामीलितलोचनो बहु मन्यते द्विरदकलभैराकृष्यमाणं मृगपतिः । इदमिह कपिकुलमपगतचापलमुपनयति मुनिकुमारकेभ्यः स्नातेभ्यः

---

इति शब्दा० । प्रतिपक्षः परिपन्थी । कोशः निधिः । आर्जवस्य सरलताया मार्दवस्य वा क्षेत्रमुत्पत्तिस्थानम् । पुण्यसंचयस्य सुकृतसमूहस्य प्रभवः जनकः । मत्सरस्येर्ष्यायाः । 'अवकाशोऽन्तरे कर्मरहितकाले प्रव्यक्ते' इति शब्दा० । अरातिररिः । परिभूतेरपमानस्यास्थानमभूमिः । अननुकूलः प्रतिकूलः । असंमतोऽनभिलषितः । अनायत्तोऽवशगः । अपगतो दूरीभूतो मत्सरः परगुणोत्कर्षासहनं यस्मात् तथाविधं वर्तते । अहो आश्चर्यम् । तिर्यञ्चः पशवः पक्षिणश्चापि शाश्वतिकं सदातनं विरोधमपहाय त्यक्त्वा उपशान्तात्मानः सन्तः तपोवनवसतेराश्रमनिवासस्य सुखमनुभवन्ति । अहिः सर्पः । शिखिनो मयूरस्य । कलापं पिच्छं विशति आतपवारणाय प्रविशति । 'कलापो भूषणे बर्हे' इत्यमरः । विकचेति—विकचं विकसितं यदुत्पलवनं कमलवनं तस्य रचनाया निर्मितेरनुकारिणम् । उत्पतत् ऊर्ध्वं गच्छत् चारु मनोहरं चन्द्रकशतं मेचकशतं यस्मिंस्तम् । हरिणस्य मृगस्य या लोचनद्युतिः नेत्रकान्तिः तद्वत् शबलं कर्बुरम् । अभिनवो नूतनः शाद्वलः हरितप्रदेशस्तमिव । शादाः सन्त्यत्रेति शाद्वलः । 'नडशादाड्ड्वलच्' इति पाणिनिसूत्रेण शादशब्दाद् ड्वलच् प्रत्ययः । कुरङ्गशावकः मृगपोतः अजातकेसरैः अनुत्पन्नसटैः केसरिशिशुभिः सिंहार्भकैः सह उपजातपरिचयः सन् स्वां जननीमुत्सृज्य क्षरन्ती स्रवन्ती क्षीरधारा दुग्धधारा यस्मात् एवंविधं सिंहीस्तनं पिबति । मृगपतिः सिंहः । मृणालेति—मृणालानां बिसानां कलापं समूहमाशङ्कन्ते तच्छीलास्तैः द्विरदानां हस्तिनां कलभैः पोतैः आकृष्यमाणमवकृष्यमाणं

फलानि। एते च न निवारयन्ति मदान्धा अपि गण्डस्थलीभाञ्जि मदजलपाननिश्चलानि मधुकरकुलानि संजातदयाः कर्णतालैः करिणः। किं बहुना तापसाग्निहोत्रधूमलेखाभिरुत्सर्पन्तीभिरनिश-मुपपादितकृष्णाजिनोत्तरासङ्गशोभाः फलमूलभृतो वल्कलिनो निश्चेतनास्तरवोऽपि सनियमा इव लक्ष्यन्तेऽस्य भगवतः। किं पुनः सचेतनाः प्राणिनः' इति।

## पक्षिविषये तापसानां जिज्ञासा

एवं चिन्तयन्तमेव मां तस्यामेवाशोकतरोरधश्छायायामेकदेशे स्थापयित्वा हारीतः पादावुपगृह्य कृताभिवादनः पितुरनतिसमीप-वर्तिनि कुशासने समुपाविशत्। आलोक्य तु मां सर्व एव मुनयः 'कुतोऽयमासादितः शुकशिशुः' इति तमासीनमपृच्छन्। असौ तु तानब्रवीत्—'अयं मया स्नातुमितो गतेन कमलिनीसरस्तीरतरु-नीडनिपतितः शुकशिशुरातपजनितक्लान्तिरुत्तप्तपांसुपटलमध्यगतो दूरनिपतनविह्वलतनुरल्पावशेषायुरासादितस्तपस्विदुरारोहतया च तस्य वनस्पतेर्न शक्यते स्वनीडमारोपयितुमिति जातदयेनानीतः। तद्यावदयमप्ररूढपक्षतिरक्षमोऽन्तरिक्षमुत्पतितुं तावदत्रैव कस्मिं-श्चिदाश्रमतरुकोटरे मुनिकुमारकैरस्माभिश्चोपनीतेन नीवारकणनि-करेण फलरसेन च संवर्ध्यमानो धारयतु जीवितम्। अनाथपरि-पालनं हि धर्मोऽस्मद्विधानाम्। उद्भिन्नपक्षतिस्तु गगनतलसंचरण-समर्थो यास्यति यत्रास्मै रोचिष्यते। इहैव वोपजातपरिचयः स्थास्यति' इत्येवमादिकमस्मत्संबद्धालापमाकर्ण्य किंचिदुपजात-कुतूहलो भगवाञ्जाबालिरीषदावलितकंधरः पुण्यजलैः प्रक्षालयन्निव

---

शशिकरधवलं चन्द्रकिरणवद् विशदं सटाभारं केसरसमूहं आमीलिते निमीलिते लोचने नयने येन तादृशः सन् बहु मन्यते। करिणः हस्तिनः। मद एव जलं। मधुकराः भ्रमराः। कृष्णाजिनस्य श्याममृगचर्मण उत्तरासङ्गस्य वैकक्ष्यस्य। यथा नियमभृत-स्तापसाः कृष्णाजिनमुत्तरीयस्थाने धारयन्ति वल्कलानि परिदधति फलानि मूलानि च अदन्ति तथा मन्ये प्रकृत्यैव एतानि वस्तूनि धारयन्तोऽमी तरवोपि तपस्यार्थमेव-दधतीति।

अप्ररूढपक्षतिः अप्ररूढा अनुत्पन्ना पक्षतिः पक्षमूलं यस्येति नीवारस्य व्रीहि-धान्यस्य। उद्भिन्नपक्षतिः समुत्पन्नपक्षमूलः। आलापं प्रश्नोत्तररूपं संभाषणमाकर्ण्य

मामतिप्रशान्तया दृष्ट्या दृष्ट्वा सुचिरमुपजातप्रत्यभिज्ञान इव पुनःपुनर्विलोक्य 'स्वस्यैवाविनयस्य फलमनेनानुभूयते' इत्यवोचत् । स हि भगवान्कालत्रयदर्शी तपःप्रभावाद्दिव्येन चक्षुषा सर्वमेव करतलगतमिव जगदवलोकयति । वेत्ति जन्मान्तराण्यतीतानि । कथयत्यागामिनमप्यर्थम् । ईक्षणगोचरगतानां च प्राणिनामायुषः संख्यामावेदयति । सर्वैव सा तापसपरिषच्छ्रुत्वा विदिततत्प्रभावा 'कीदृशोऽनेनाविनयः कृतः, किमर्थं वा कृतः, क वा कृतः, जन्मान्तरे वा कोऽयमासीत्' इति कौतूहलिन्यभवत् । उपनाथितवती च तं भगवन्तम्, 'आवेदय, प्रसीद भगवन्, कीदृशस्याविनयस्य फलमनेनानुभूयते । कश्चायमासीज्जन्मान्तरे । विहगजातौ वा कथमस्य संभवः । किमभिधानो वायम् । अपनयतु नः कुतूहलम् । आश्चर्याणां हि सर्वेषां भगवान्प्रभवः' ।

## तापसानां जिज्ञासाया निवारणम्

इत्येवमुपयाच्यमानस्तपोधनपरिषदा स महामुनिः प्रत्यवदत्—'अतिमहदिदमाश्चर्यमाख्यातव्यम् । अल्पशेषमहः । प्रत्यासीदति च नः स्नानसमयः । भवतामप्यतिक्रामति देवार्चनविधि-

---

श्रुत्वा । किञ्चित् उपजातं संजातं कुतूहलं कौतुकं यस्य सः । ईषत् किंचित् आवलिताकम्पिता कन्धरा ग्रीवा येन सः । पुण्यजलैः पवित्रपानीयैः । पूर्वानुभूतस्य कालान्तरे प्रमाणेन तत्त्वोल्लेखपूर्वकं ज्ञानं प्रत्यभिज्ञानम् । 'सोऽयं देवदत्तः' इत्यादिकम् ) स हीति—( 'हि हेताववधारणे' इत्यमरः ) यतः स प्रसिद्धो भगवान् जाबालिः कालत्रयदर्शी कालत्रयस्य अतीतानागत वर्तमानलक्षणस्य दर्शी दर्शकः । करतलगतमिव हस्तन्यस्तमिव । अर्थो वस्तु । ईक्षणयोर्लोचनयोः गोचरं विषयं गतानां प्राप्तानां प्राणिनां जन्तूनामायुषः जीवितस्य संख्यां निवेदयति । सर्वैति—विदिततत्प्रभावा विदितः ज्ञातः तस्य जाबालेः प्रभावो माहात्म्यं यया सा सर्वा निखिला एव तापसपरिषत् मुनिसभा 'कीदृशः अनेन अविनयः कृतः' इत्यादि ज्ञातुं कौतूहलिनी कौतुकवती अभवत् । उपनाथितवती प्रार्थितवती । विहगजातौ पक्षिजातौ । संभव उत्पत्तिः । प्रभव उत्पत्तिस्थानम् ।

इति इत्थम् । तपोधनपरिषदा तापससभया उपयाच्यमानः प्रार्थ्यमानः स

वेला। तदुत्तिष्ठन्तु भवन्तः। सर्व एवाचरन्तु यथोचितं दिवसव्यापारम्। अपराह्णसमये भवतां पुनः कृतमूलफलाशनानां विस्रब्धोपविष्टानामादितः प्रभृति सर्वमावेदयिष्यामि योऽयम्, यच्चानेन कृतमपरस्मिञ्जन्मनि, इह च लोके यथास्य संभूतिः। अयं च तावदपगतक्लमः क्रियतामाहारेण। नियतमयमप्यात्मनो जन्मान्तरोदन्तं स्वप्नोपलब्धमिव मयि कथयति सर्वमशेषतः स्मरिष्यति' इत्यभिदधदेवोत्थाय सह मुनिभिः स्नानादिकमुचितदिवसव्यापारमकरोत्।

अनेन च समयेन परिणतो दिवसः। स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले दत्तस्तमम्बरतलगतः साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत्। ऊर्ध्वमुखैरर्कबिम्बविनिहितदृष्टिभिरूष्मपैस्तपोधनैरिव परिपीयमानतेजःप्रसरो विरलातपस्तनिमानमभजत्। उद्यत्सप्तर्षिसार्थस्पर्शपरिजिहीर्षयेव

---

महामुनिर्जाबालिः प्रत्यवदत्। देवार्चनविधिवेला देवपूजनसमयः अतिक्रामति व्यत्येति। तत् तस्मात्। दिवसव्यापारं दिनकृत्यमाचरन्तु निर्वर्तयन्तु। अपराह्णसमये द्विप्रहरानन्तरं कृतं विहितं मूलफलादीनामशनं भोजनं यैस्तेषां विस्रब्धोपविष्टानां विस्रब्धं यथा स्यात्तथा विश्वस्ततया सुस्थभावेनोपविष्टानां भवताम्। संभूतिरुत्पत्तिः। अपगतो दूरीभूतः क्लमः क्लान्तिः खेदो वा यस्य स व्यपगतश्रमः। उदन्तं वृत्तान्तं स्वप्नोपलब्धमिव स्वप्ने दृष्टमिव अशेषत आमूलचूलतः स्मरिष्यति। दिवसः परिणतः सायंकालोऽभवत्। अम्बरतलगतः गगनगतः रविः सूर्यः तं रक्तचन्दनाङ्गरागं, रक्तचन्दनेन निर्मितोऽङ्गरागः, साक्षात् इव प्रत्यक्षमिव मुनिप्रत्यर्पितमूर्तिरूपेणैवेत्यर्थः। उदवहत् दधार। तं कम्। यः स्नानोत्थितेन स्नात्वा उत्थितेनेत्यर्थः मुनिजनेन तापसजनेन अर्घविधिं रक्तचन्दनादिना पूजाविधिमुपपादयता कुर्वता सूर्याय क्षितितले पृथ्व्यां दत्तः सूर्यायार्पित इत्यर्थः। सायंकाले सूर्यस्य रक्तवर्णत्वात् मुनिप्रदत्तश्चन्दनाङ्गरागः किमनेन सूर्येण साक्षादिव गृहीत इत्युत्प्रेक्ष्यते। ऊर्ध्वेति—सायं मन्दातपो रविर्यत्कार्श्यमासेवते तत्र हेतुरुत्प्रेक्ष्यते—ऊर्ध्वमुखैरूर्ध्वाननैरर्कबिम्बे सूर्यबिम्बे विनिहिता स्थापिता दृष्टिर्यैस्ते तैस्तथाविधैरूष्मपैरूष्मा सूर्योत्तापः तं पिबन्तीति तैः तपोधनैस्तापसैरिव परिपीयमानः निपीयमानः तेजसः प्रतापस्य कान्तेर्वा प्रसरः प्रचारो यस्य सः, अतएव विरलातपः मन्दातपः सन् सूर्यः तनिमानं तनुतामभजत् असेवत। उद्यदिति—उद्यन् उद्गच्छन् यः सप्तर्षीणां सार्थः समूहः तस्य स्पर्शं संपर्क

संहृतपादः पारावतपादपाटलरागो रविरम्बरतलादवालम्बत। आलोहितांशुजालं जलशयनमध्यगतस्य मधुरिपोर्विगलन्मधुधारमिव नाभिनलिनं प्रतिमागतमपरार्णवे सूर्यमण्डलमलक्ष्यत। विहायाम्बरतलमुन्मुच्य च कमलिनीवनानि शकुनय इव दिवसावसाने तरुशिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत। आलग्नलोहितातपच्छेदा मुनिभिरालम्बितलोहितवल्कला इव तरवः क्षणमदृश्यन्त। अस्तमुपगते च भगवति सहस्रदीधिताव-परार्णवतलादुल्लसन्ती विद्रुमलतेव पाटला संध्या समदृश्यत। यस्यामाबध्यमानध्यानम्, एकदेशदुह्यमानहोमधेनुदुग्धधाराध्वनितधन्यतरातिमनोहरम्, अग्निवेदिविकीर्यमाणहरित्कुशम्, ऋषिकुमारिकाभिरितस्ततो विक्षिप्यमाणदिग्देवताबलिसिक्थमाश्रमपदमभवत्। क्वापि विहृत्य दिवसावसाने लोहिततारका तपोवनधेनुरिव कपिला परिवर्तमाना संध्या तपोधनैरदृश्यत। अचिर-

---

परिहर्तुमिच्छया परिजिहीर्षया इव संहृतपादः संहृताः समाहृताः पादा रश्मयो येन सः। पारावतस्य कलरवस्य पादवत् चरणवत् पाटलो रागो यस्य तथाभूतः सन् सूर्यः अम्बरतलाद् गगनतलादवालम्बताधो ललम्बे। पूज्यानामृषीणां पादस्पर्शो मा भूदिति बुद्ध्या रविणा पादा उपसंहृता इत्यर्थः। आलोहितेति—अपरार्णवे पश्चिमपयोनिधौ प्रतिमागतं प्रतिबिम्बितं सूर्यमण्डलं जलशयनमध्यगतस्य मधुरिपोर्विष्णोः आलोहितांशुजालम् आलोहितमरुणमंशूनां रश्मीनां जालं समूहो यस्य तत् विगलन्मधुधारं विगलन्ती प्रस्रवन्ती मधुधारा पुष्परसप्रवाहो यस्मात् तत् नाभिनालिनामिव नाभिपद्ममिव अलक्ष्यत अदृश्यत। रविकिरणाः सूर्यरश्मयः शकुनयः पक्षिण इव दिवसावसाने सायंकाले अम्बरतलं विहाय कमलिनीवनानि नलिनीवनानि च उन्मुच्य विमुच्य वृक्षाग्रेषु महीधरशृङ्गेषु च स्थितिं चक्रुः। आलग्नेति—आलग्नाः संसक्ताः लोहिता अरुणा आतपच्छेदा आतपखण्डा येषां ते तरवः पादपाः क्षणमीषत्कालं मुनिभिस्तापसैः आलम्बितानि प्रलम्बितानि लोहितानि वल्कलानि येषु ते इव अदृश्यन्त। सहस्रदीधितौ सूर्ये। अपरार्णवतलात् पश्चिमसागरात्। पाटला श्वेतरक्तवर्णा। आबध्येति—आबध्यमानं क्रियमाणं ध्यानम् एकप्रत्ययसंततिर्यत्र। अग्नीति—अग्निवेदिकायां यज्ञशालायां विकीर्यमाणा प्रक्षिप्यमाणा हरित्कुशा हरिद्दर्भा यत्र तत्। ऋषिकुमारिकाभिः इतस्ततो यत्र तत्र विक्षिप्यमाणानि प्रकीर्यमाणानि दिग्देवतानां बलिसिक्थानि बलिसंबन्धिसिद्धान्नानि यस्मिंस्तत्। लोहिततारका लोहिता रक्ता तारका कनीनिका यस्याः

प्रोषिते सवितरि शोकविधुरा कमलमुकुलकमण्डलुधारिणी हंससितदुकूलपरिधाना मृणालधवलयज्ञोपवीतिनी मधुकरमण्डलाक्षवलयमुद्वहन्ती कमलिनी दिनपतिसमागमव्रतमिवाचरत्। अपरसागराम्भसि पतिते दिवसकरे वेगोत्थितमम्भःसीकरनिकरमिव तारागणमम्बरमधारयत्। अचिराच्च सिद्धकन्यकाविक्षिप्तसंध्यार्चनकुसुमशबलमिव तारकितं वियदराजत। क्षणेन चोन्मुखेन मुनिजनेनोर्ध्वविप्रकीर्णैः प्रणामाञ्जलिसलिलैः क्षाल्यमान इवागलदखिलः संध्यारागः।

क्षयमुपगतायां संध्यायां तद्विनाशदुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गममभिनवमवहत्। अपहाय मुनिहृदयानि सर्वमन्यदन्धकारतां तिमिरमनयत्। क्रमेण च रविरस्तं गत इत्युदन्त-

---

सा। कपिला ताम्रवर्णा तपोवनधेनुरिव मुनिहोमधेनुरिव लोहिततारका रक्तनत्त्रा कपिला ताम्रवर्णा परिवर्तमाना अवस्थान्तरमापन्ना सन्ध्या तापसैः समदृश्यत। कमलिनी पद्मिनी अचिरप्रोषिते सद्य एव प्रवासमुपगते सवितरि दिनकरे शोकविधुरा विरहव्याकुला सती दिनपतेः सूर्यस्य पुनः समागमार्थं व्रतमिवाचरत्। कथंभूता कमलिनी किं कुर्वन्ती च। संकुचितमुखसाम्यात् कमलमुकुलानि एव कमण्डलूनि तानि धारयति तच्छीला, हंसा राजहंसा एव सितं दुकूलं तत् परिधानमंशुकं यस्याः सा, श्वेततन्तुसाम्यात् मृणालान्येव धवलं सितं यज्ञोपवीतं यज्ञसूत्रं यस्याः सा, मधुकराणां भ्रमराणां मण्डलमेवाक्षवलयं रुद्राक्षमाला तद् उद्वहन्ती धारयन्ती। दिवसकरे सूर्ये अपरसागराम्भसि पश्चिमार्णवे पतिते निपतिते सति वेगोत्थितं वेगादुपर्युत्थितमम्भःसीकरनिकरमम्भसो जलस्य सीकराः कणास्तेषां निकरं समूहमिव अम्बरमाकाशं (कर्तृ) तारागणं नक्षत्रमण्डलम् (कर्म) अधारयद्दधार। तारकितं तारकाः संजाताः यस्य तत्तारकितं 'तदस्य संजातं तारकादिभ्य इतच्' इति इतच् प्रत्ययः। वियद् व्योम। सिद्धानां देवयोनिविशेषाणाम्। शबलं कर्बुरम् उन्मुखेन ऊर्ध्वाननेन। क्षयेति—सन्ध्यायां क्षयं नाशमुपगतायां तद्विनाशे दुःखिता तस्या विनाशेन ध्वंसेन दुःखिता खिन्ना विभावरी रात्रिः कृष्णाजिनमिव कृष्णमृगचर्मेव अभिनवं नूतनं तिमिरोद्गमं ध्वान्तोदयमवहत् अधारयत्। शोकावसरे नीलवस्त्रधारणमाचारः। तिमिरं (कर्तृ) केवलं मुनिहृदयानि तापसचेतांसि अपहाय विहाय अन्यदितरत् सर्वं कृत्स्नम् अन्धकारतामचाक्षुषतामनयत् प्रापयत्। उदन्तं वार्तामुपलभ्य प्राप्य अमृतदीधितिश्चन्द्रः अमरलोकाश्रममिव स्वर्गाश्रममिव गगनतलमम्बरमध्यतिष्ठत्। कीदृशोऽमृतदीधितिः कीदृशं च गगनतल-

मुपलभ्य जातवैराग्यो धौतदुकूलवल्कलधवलाम्बरः सतारान्तःपुरपर्यन्तस्थिततनुतिमिरतमालवनलेखं सप्तर्षिमण्डलाध्युषितमरुंधतीसंचरणपूतमुपहिताषाढमालक्ष्यमाणमूलमेकान्तस्थितचारुतारकामृगममरलोकाश्रममिव गगनतलममृतदीधितिरध्यतिष्ठत् । चन्द्राभरणभृतस्तारकाकपालशकलालंकृतादम्बरतलात् त्र्यम्बकोत्तमाङ्गादिव गङ्गा सागरानापूरयन्ती हंसधवला धरण्यामपतज्ज्योत्स्ना । हिमकरसरसि विकचपुण्डरीकसिते चन्द्रिकाजलपानलो-

---

मित्याह—जातेति–जातवैराग्यो जातं वैराग्यं वितृष्णता विरक्तता यस्य सः । विशिष्टो-रागो वर्णो विरागस्तस्य भावो वैराग्यमिति चन्द्रपक्षे । वितृष्णता च मुनिपक्षे । धौतदुकूलवल्कलधवलाम्बरः—धौतं क्षालितं दुकूलवल्कलमेव धवलाम्बरं वस्त्रं यस्येति मुनिपक्षे । धौतदुकूलवल्कलवत् धवलं शुभ्रमम्बरमाकाशं यस्येति चन्द्रपक्षे । सतारेति—सतारं सप्रणवमन्तःपुरं हृदयं यस्य स ध्याननिष्ठ इति मुनिपक्षे । ताराः अश्विन्यादयः एव अन्तःपुराणि स्त्रियस्तैः सहितः इति चन्द्रपक्षे । तारो नक्षत्रे प्रणवे तरणे नेत्रमध्ये रूप्ये इत्यादीति शब्दार्थचिन्तामणिः । पर्यन्ते प्रान्तभागे स्थिता तनुतिमिरवत् स्वल्पान्धकारवत् तमालवनानां तापिच्छकाननानां लेखा पङ्क्तिर्यत्र तम् ( आश्रममित्यर्थः ) । पक्षे—पर्यन्ते स्थितं तनुतिमिरं निजोदयेन विरलमन्धकारं तमालवनरेखेव यत्र तत् गगनतलम् । सप्तर्षीति—सप्तर्षीणां सप्तर्षिसदृशानां नारदादीनां मण्डलेन समूहेनाधिष्ठितम् । पक्षे सप्तर्षयः सप्ततारा: । अरुंधतीति—अरुंधती वसिष्ठपत्नी । पक्षे ताराविशेषः । तस्याः संचरणेन पूतं पवित्रम् । उपहितेति-उपहितः संनिहितः आषाढः पालाशदण्डो यत्र । 'पालाशो दण्ड आषाढ' इति अभिधानचिन्तामणिः । पक्षे आषाढा पूर्वाषाढानक्षत्रम् । आलक्ष्येति–आलक्ष्यमाणानि समन्तात् विलोक्यमानानि मूलानि वसुधान्तर्गतवृक्षमूलानि यत्र तम् ( आश्रमम् ) । पक्षे मूलं मूलनक्षत्रम् । एकान्तेति—एकान्ते एकान्तप्रदेशे स्थिता निविष्टाश्चारवः मनोहराकृतयस्तारकामृगाः श्वेतमृगा यत्र तमाश्रमम् । पक्षे—तारकारूपं मृगनक्षत्रं यत्र तत् गगनतलम् । चन्द्रमेवाभरणमलङ्कारं बिभर्तीति तस्मात् तारका एव कपालशकलानि कर्परखण्डानि तदलंकृतात् भूषितात् अम्बरतलात् गगनतलात्, हंसधवला हंसवत् धवला शुभ्रवर्णा ज्योत्स्ना चन्द्रिका सागरान् उदधीन् आपूरयन्ती धरण्यां मह्यामपतत् । कस्मात् केव । त्र्यम्बकोत्तमाङ्गात् त्र्यम्बकस्य शिवस्य उत्तमाङ्गात् शिरसः गङ्गेव भागीरथीव । चन्द्राभरणेत्यादि विशेषणद्वयं त्र्यम्बकोत्तमाङ्गेऽपि योजनीयम् । गङ्गापि सागरानापूरयति । हिमेति—हिमकरश्चन्द्रः स एव सरः तस्मिन् । विकचेति–

भादवतीर्णो निश्चलमूर्तिरमृतपङ्कलग्न इवादृश्यत हरिणः। तिमिरजलधरसमयापगमानन्तरमभिनवसितसिन्दुवारकुसुमपाण्डुरैरर्णवागतैरवागाह्यन्त हंसैरिव कुमुदसरांसि चन्द्रपादैः। विगलितसकलोदयरागं रजनिकरबिम्बमम्बरापगावगाहधौतसिन्दूरमैरावतकुम्भस्थलमिव तत्क्षणमलक्ष्यत। शनैः शनैश्च दूरोदिते भगवति हिमततिस्रुति सुधाधूलिपटलेनेव धवलीकृते चन्द्रातपेन जगति अवश्यायजलबिन्दुमन्दगतिषु विघटमानकुमुदवनकषाय-

---

विकचानि विकसितानि यानि पुण्डरीकाणि श्वेतकमलानि तद्वत् सिते शुभ्रे। चन्द्रपक्षे तद्वत् सरःपक्षे तैरिति ज्ञेयम्। चन्द्रिकेति—चन्द्रिका ज्योत्स्ना एव जलं तस्य पानस्य लोभात् अवतीर्णः तत्र प्राप्तः। निश्चला मूर्तिर्यस्य सः निस्पन्दावयवः हरिणो मृगः। अमृतमेव पङ्कस्तत्र लग्नः सक्त इव अलक्ष्यत। तिमिरं तम एव जलधरसमयः प्रावृट्कालस्तस्य अपगमानन्तरं तस्मिन् व्यतीत इत्यर्थः। अभिनवं प्रत्यग्रं सितं शुभ्रं यत् सिन्दुवारस्य निर्गुण्ड्याः कुसुमं प्रसूनं तद्वत् पाण्डुरैः शुभ्रैः अर्णवागतैः सागरं प्राप्तैः हंसै राजहंसैरिव अर्णवागतैः सागरं प्राप्तैः चन्द्रपादैः हिमकरकिरणैः अगाह्यन्तालोड्यन्त कुमुदसरांसि कैरवतटाकानि। अभिनवासितत्वादि विशेषणं हंसचन्द्रपादोभयगतं ज्ञेयम्। विगलितः व्यपगतः सकलः सर्वः उदयरागः उदयकालीनो रागो वर्णो यस्य तत् रजनिकरबिम्बम् चन्द्रबिम्बं तत्क्षणं तस्मिन्काले अम्बरापगायां स्वर्गङ्गायामवगाहेन आलोडनेन धौतं क्षालितं सिन्दूरं मस्तकतिलकं यस्य तदेवंविधमैरावतकुम्भस्थलमिव देवेन्द्रहस्तिमस्तकमिव अलक्ष्यत जनैरैक्ष्यत। हिमततिस्रुति चन्द्रमसि दूरोदिते दूरपर्यन्तं व्योम्नि समागते सति सुधाधूलिपटलेन अमृतरजःपुञ्जेनेव चन्द्रातपेन ज्योत्स्नया जगति भूमण्डले धवलीकृते सितीकृते सति। अवश्यायेति—अवश्यायजलस्य नीहारसलिलस्य बिन्दुभिर्मन्दा गतिर्येषां तेषु। विघटमानानि विकसितानि यानि कुमुदवनानि तैः कषायः परिमलो गन्धो येषु तेषु। समुपोढेति—समुपोढा सम्यक् प्राप्ता या निद्रा तस्या भरेण भारेण अलसा मन्थरा तारका कनीनिका येषां तैः। अन्येति—अन्योन्यं परस्परं ग्रथितानि संश्लिष्टानि पक्ष्मपुटानि नेत्ररोमाणि येषां तैः। आरब्धः प्रारब्धः यः रोमन्थः चर्वितचर्वणं तेन मन्थराणि अलसानि मुखानि येषां तैः। सुखासीनैः सुखमुपविष्टैः। अभिनन्दितं समर्थितमागमनं येषां तेषु निशामुखसमीरणेषु प्रदोषवायुषु प्रवहत्सु प्रयात्सु सत्सु। अर्धेति—रात्रेस्त्रयो यामा इति गृहीत्वा अर्धयाममात्रेणार्ध-

परिमलेषु समुपोढनिद्राभरालसतारकैरन्योन्यग्रथितपक्ष्मपुटैरारब्धरोमन्थमन्थरमुखैः सुखासीनैराश्रममृगैरभिनन्दितागमनेषु प्रवहत्सु निशामुखसमीरणेष्वर्धयाममात्रावखण्डितायां विभावर्यां हारीतः कृताहारं मामादाय सर्वैस्तैर्महामुनिभिरुपसृत्य चन्द्रातपोद्भासिनि तपोवनैकदेशे वेत्रासनोपविष्टमनतिदूरवर्तिना जालपादनाम्ना शिष्येण दर्भपवित्रधवित्रपाणिना मन्दमुपवीज्यमानं पितरमवोचत्—'हे तात, सकलेयमाश्चर्यश्रवणकुतूहलाकलितहृदया समुपस्थिता तापसपरिषदाबद्धमण्डला प्रतीक्षते। व्यपनीतश्रमश्च कृतोऽयं पतत्रिपोतः। तदावेद्यतां यदनेन कृतम्। अपरस्मिञ्जन्मनि कोऽयमभूद्भविष्यति च' इति। एवमुक्तस्तु स महामुनिरग्रतः स्थितं मामवलोक्य तांश्च सर्वानेकाग्राञ्छ्रवणपरान्मुनीन्बुद्ध्वा शनैःशनैरब्रवीत्—'श्रूयतां यदि कौतूहलम्'—॥

## शुकनासोपदेशः

एवं समतिक्रामत्सु दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः प्रतीहारानुपकरणसंभारसंग्रहार्थमादिदेश। समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागतमारूढ-

---

प्रहरमात्रेण अवखण्डितायां व्यतीतायां विभावर्यां रात्रौ। हारीतः कृताहारं कृताशनं मामादाय तैः सर्वैः मुनिभिः सह उपसृत्य गत्वा। चन्द्रातपेन ज्योत्स्नया उद्भासिनि भासमाने धवलीभूते इत्यर्थः। अनतिदूरवर्तिना नातिसंनिकृष्टेन दर्भपवित्रधवित्रपाणिना दर्भवत् कुशवत् पवित्रं पूतं यत् धवित्रं चर्मनिर्मितं व्यजनं तत् पाणौ हस्ते यस्य तेन जालपादनाम्ना शिष्येण मन्दं मन्थरमुपवीज्यमानम्। सकला समग्रा इयं तापसपरिषद् मुनिसंसत् आश्चर्यस्याद्भुतवस्तुनः श्रवणे आकर्णने यत् कुतूहलं कौतुकं तेन आकुलितं व्याप्तं हृदयं चित्तं यस्याः सा अत एव आबद्धमारचितं मण्डलं यया सा समुपस्थिता सती प्रतीक्षते प्रतिपालयति भवन्तमिति शेषः। अयं च पतत्रिपोतः विहगार्भकः व्यपनीतश्रमः अपगतक्लमः।

प्रतीहारान् द्वारपालान् उपकरणसंभारसंग्रहार्थम्—उपकरणस्य साधनसामग्र्याः। उपकरणं नृपादीनां छत्रचामरादौ परिच्छदे साधनसामग्र्याम् इति शब्दार्थचि०। यः संभारः राशिस्तस्य संग्रहार्थमानयनार्थमादिदेश आज्ञप्तवान्। आरूढो विनयो यस्य तं प्राप्तविनयम्। विदितं ज्ञातं वेदितव्यं ज्ञातव्यं येन तस्य। अधीतानि पठितानि सर्वाणि शास्त्राणि येन तस्य ते तव कृते। निसर्गतः स्वभावतः।

विनयमपि विनीततरमिच्छञ्शुकनासः सविस्तरमुवाच—'तात चन्द्रापीड, विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति। केवलं च निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्। अपरिणामोपशमो दारुणो लक्ष्मीमदः। कष्टमनञ्जनवर्तिसाध्यमपरमैश्वर्यतिमिरान्धत्वम्। अशिशिरोपचारहार्योऽतितीव्रो दर्पदाहज्वरोष्मा। सततममूलमन्त्रगम्यो विषमो विषयविषास्वादमोहः। नित्यमस्नानशौचवध्यो रागमलावलेपः। अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसंनिपातनिद्रा भवतीति विस्तरेणाभिधीयसे। गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थ-

---

यौवनप्रभवं तारुण्यजनितं तमोऽज्ञानम्। अतिगहनं दुर्दमनीयम्। भानुना सूर्येण भेद्यमुच्छेद्यमिति तद्विपरीतम्। रात्र्यादिकृतं तमो भानुरुच्छिनत्ति परं यौवनप्रभवतमस उच्छेदने तस्यापि कुण्ठिता शक्तिरित्यर्थः। तमोऽत्र अज्ञानं कार्याकार्यविवेको मोहान्धकारो वा। अरत्नेति—रत्नालोकोच्छेद्यं न रत्नालोकोच्छेद्यमिति अरत्नालोकोच्छेद्यम्। अप्रदीपेति—प्रदीपप्रभया दीपालोकेनापि नापनेयं न दूरीकर्तुं शक्यम्। अपरिणामेति—न विद्यते परिणामे अन्ते उपशमो यस्यासौ अपरिणामोपशमः। दारुणो भयावहः। लक्ष्म्याः श्रिया मदो दर्पः। कष्टमिति—अपरं प्रसिद्धात् अन्धत्वाद् भिन्नम्। ऐश्वर्यं प्रभुत्वमेव तिमिरमन्धकारं तेनान्धत्वं कष्टं दुःखरूपमित्यर्थः। यद्धि खलु अनञ्जनवर्तिसाध्यम् न अञ्जनवर्त्या साध्यम्। अञ्जनवर्तिः बिडालादिवसाञ्जनवर्तिस्तया तिमिरान्धता नश्यति। अर्थात् इदमैश्वर्यतिमिरान्धत्वमञ्जनवर्त्यापि न निवारयितुं शक्यम्। दर्पोऽभिमानः स एव दाहज्वरस्तीव्रतापस्तस्योष्मा धर्मः अतितीव्रः अतिदुःसहः। यः शिशिरैः शीतलैश्चन्दनादिभिरुपचारैः अपि हर्तुं दूरीकर्तुं न शक्यः। सततमिति—विषयाः स्त्र्यन्नपानादय एव विषं गरलं तस्यास्वाद उपभोगः तज्जो मोहः विषमो दारुणो भवति। यः खलु अमूलमन्त्रगम्यः मूलमन्त्रैरपि अपाकर्तुमनर्हः। नित्यमिति रागो विषयाभिलाषः स एव पङ्कः तस्यावलेपः संपर्कः नित्यमहरहः स्नानमाप्लावः शौचं शुद्धिः ताभ्यामपि न बाध्यः नापनेतुं शक्यः। अजस्रमिति—राज्यस्याधिपत्यस्य यत्सुखं तस्य संनिपातः संघातः स एव निद्रा अजस्रं सततं क्षपावसाने रात्र्यन्तेऽपि न प्रबोधो जागरणं यस्यामीदृशी अत एव घोरा दारुणा। इति विस्तरेण व्यासेनाभिधीयसे मुहुर्विस्तरतश्च प्रबोध्यस इत्यर्थः। अभिनवयौवनत्वं नूतनं तारुण्यम् अप्र-

परंपरा सर्वा । अविनयानामेकैकमप्येषामायतनम्, किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलतापि सरागेव भवति यूनां दृष्टिः । अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः । इन्द्रियहरिणहारिणी च सततदुरन्तेयमुपभोगमृगतृष्णिका । नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति भाजनान्युपदेशानाम् ।

---

तिमरूपत्वमनुपमं सौन्दर्यम् । अमानुषशक्तित्वम् अलौकिकं सामर्थ्यम् । एषां गर्भेश्वरत्वादीनामेकैकमपि अविनयानामायतनं स्थानम् । किमुत समूहः । यदैषामेकमप्यश्रेयसे प्रभु तत्समुदायस्य तु कैव कथा । शास्त्रमागम एव जलं सलिलं तेन प्रक्षालनेन शोधनेन निर्मलापगतमलापि बुद्धिः कालुष्यं मालिन्यं विपरीतकार्यकर्तृत्वमुपयाति प्राप्नोति । यूनां तरुणानां दृष्टिर्दृक् अनुज्झितधवलता नोज्झिता न त्यक्ता धवलता श्वेतता यया सा अपि सरागा एव रागेण सह वर्तमाना । एकत्र रागोऽनुरागोऽपरत्रारुणिमा । अपहरतीति—यौवनसमये तारुण्ये समुद्भूतो रजसां रेणूनां भ्रमो भ्रमणं यस्यां सा वात्या वातसमूहो यथा शुष्कपत्रमपहरति तथैव समुद्भूता समुत्पन्ना रजसा रजोगुणेन भ्रान्तिर्भ्रमो यस्यां सा प्रकृतिः आत्मेच्छया पुरुषमतिदूरं नयति । 'काम एष क्रोध एष रजोगुणसमुद्भवः अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः' । इति गीतास्मरणादित्यर्थः । इन्द्रियेति—इन्द्रियाण्येव करणान्येव हरिणाः कुरङ्गाः तान् हर्तुं शीलं यस्याः सैतादृश्युपभोगः अङ्गनाद्यासक्तिः स एव मृगतृष्णिका मरुमरीचिका सततमनारतं दुरन्ता दुःखावसाना । नवयौवनेन कषायितः कालुष्यं प्रापित आत्मा अन्तःकरणं यस्य तस्य । अन्यत्र तुवररसवत इति ज्ञेयम् । तान्येव विषयस्वरूपाणि मधुरतराणि आपतन्ति भवन्ति । अर्थात् यथा हरीतक्यादिना कषायितरसनस्य पुंसः सलिलं मधुरतरं जायते तथैव कामाद्युपभोगभाजः पुरुषस्य मुहुर्मुहुः तान्येव विषयरूपाणि चेत आकर्षन्ति । नाशयतीति—यथा उन्मार्गप्रवर्तकः अपथप्रापयिता दिङ्मोहः पुरुषं नाशयति तथैव विषयेषु स्त्र्यन्नपानादिषु अत्यासङ्गोऽत्यासक्तिर्नाशयति । विषयासक्तिरपि पुरुषमपथे नयति । भवादृशास्त्वद्विधा एव उपदेशानां शिक्षाणां भाजनानि पात्राणि । अपेति—स्फटिकमणौ रजनिकरगभस्तयश्चन्द्रकिरणा इव अपगतमले विगतकालुष्ये हृदि उपदेशगुणाः शिक्षागुणाः सुखेनानायासेन विशन्ति

अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेनोपदेशगुणाः। गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य। इतरस्य तु करिण इव शङ्खाभरणमानन-शोभासमुदयमधिकतरमुपजनयति । हरत्यतिमलिनमन्धकारमिव दोषजातं प्रदोषसमयनिशाकर इव गुरूपदेशः प्रशमहेतुर्वयःपरिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन्गुणरूपेण तदेव परिणमयति । अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । कुसुमशरशरप्रहारजर्जरिते हि हृदि जलमिव गलत्युपदिष्टम् । अकारणं च भवति दुष्प्रकृतेरन्वयः श्रुतं चाविनयस्य । चन्दनप्रभवो न दहति किमनलः । किं वा प्रशमहेतुनापि न प्रचण्डतरीभवति वडवानलो वारिणा । गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानम्, अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम्,

---

इतरेति—इतरस्य तु साधोस्तु इव यथा शङ्खाभरणं कम्बुभूषणं करिणो हस्तिनः अधिकतरमत्यधिकं आननशोभासमुदयं मुखकान्तिसमूहमुपजनयति तथैव गुरूपदेशोऽपि साधुपुरुषस्य भूषणायते एव । हरतीति—इव यथा प्रदोषसमये निशाकरो रजनीमुखचन्द्रः अतिमलिनं दोषजातं रात्रिकृतम् अतिश्याममन्धकारम् हरत्यपनयति तथैव गुरूपदेशोऽपि पुरुषस्य सर्वदोषजातं दोषसमूहं हरति । प्रशमोऽन्तरिन्द्रियनिग्रहस्तस्य हेतुर्गुरूपदेशो गुरुशिक्षा शिरसिजजालं शिरोरुहसमूहममलीकुर्वन् गुणरूपेण तदेव परिणमयति परिपाकं नयति । क इव । वयःपरिणाम इवावस्थापरिणतिरिव । यथा सोऽपि केशसमूहं पलितरूपेणामलीकुर्वन् तदेव शिरसिजजालं गुणरूपेण परिणमयति। अनास्वादितोऽननुभूतो विषयरसो येन तस्य ते तव उपदेशकालः शिक्षणसमयः । कुसुमेशरः कंदर्पः तस्य शराणां बाणानां प्रहारैरभिघातैर्जर्जरिते शिथिलीभूते हृदि जलमिव उपदिष्टं गलति निरर्थकं भवति । दुष्प्रकृतेः दुष्टस्वभावस्य पुंसः अन्वयः सत्कुले उत्पत्तिः श्रुतं शास्त्राधीतिश्च विनयस्य अकारणं न कारणं भवति, सत्कुले उत्पत्तिरपि दुष्टस्वभावं पुरुषं न निवारयितुमीष्टे असत्कर्मण इत्यर्थः । चन्दनेति—किमिति प्रश्ने । किं चन्दनप्रभवः मलयजजनितोऽनलोऽग्निर्न दहति । अपि तु दहत्येवेत्यर्थः । किं वेति । अथवा किम् प्रशमहेतुना प्रशमकारणेन निर्वापयित्रेत्यर्थः वारिणा जलेन वडवानलो वडवाग्निः न प्रचण्डतरीभवति न प्रबलो भवति । वाडवानलस्योत्पत्तिरेव समुद्राद्भवति । गुरूणां हिताहितप्राप्तिपरिहारोपदेष्टॄणामुपदेशः शिक्षा पुरुषाणामजलं जलव्यतिरेकेणापि स्नानमभिषेक आप्लावो वा । अनुपजातं नोत्पन्नं

अनारोपितमेदोदोषं गुरूकरणम्, असुवर्णविरचनमग्राम्यं कर्णाभरणम्, अतीतज्योतिरालोकः, नोद्वेगकरः प्रजागरः। विशेषेण राज्ञाम्। विरला हि तेषामुपदेष्टारः। प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात्। उद्दामदर्पश्वयथुस्थगितश्रवणविवराश्चोपदिश्यमानमपि ते न शृण्वन्ति। शृण्वन्तोऽपि च गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून्। अहंकारदाहज्वरमूर्छान्धकारिता विह्वला हि राजप्रकृतिः, अलीकाभिमानोन्मादकारीणि धनानि, राज्यविषविकारतन्द्राप्रदा राजलक्ष्मीः। आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम्। इयं हि खड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः क्षीरसागरात्पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवसश्चञ्चलताम्,

---

पलितादिना वैरूप्यं यत्र तत्, अजरं न जरा, वार्धक्यं यत्र तत्, वृद्धत्वम् स्थविरत्वम्। अनारोपितो न स्वीकृतो मेदोदोषो येनैवंभूतं गुरूकरणं स्थूलीभवनम्। सुवर्णेन कनकेन। ग्राम्या हि सुवर्णव्यतिरिक्तेन येन केनापि धातुना कर्णाभरणं विरचयन्ति तच्च न प्रशंसार्हं भवति। परं गुरूपदेशो नाम कर्णाभरणमलौकिकमेव यत् अधातुनिर्मितमपि प्रशंसास्पदं भवति। अतीतं विगतं ज्योतिः प्रकाशो यस्मादेवंभूत आलोक उद्योतोऽस्ति गुरूपदेशः। आलोको हि ज्योतिः कार्यं भवति अत्र तु तद्व्यतिरेकेऽपि प्रकाशोऽस्ति। प्रजागरो जागरणम्। जनो लोकः भयाद्धेतोः राजवचनं राज्ञोदितं वचनं प्रतिशब्दक इव प्रतिध्वनिरिव अनुगच्छति अनुसरति। उद्दामोऽतिप्रवृद्धो यो दर्पो अहंकारः स एव श्वयथुः शोथः तेन स्थगितमवरुद्धं श्रवणविवरं कर्णरन्ध्रं येषां ते उपदिश्यमानमपि हितं कथ्यमानमपि न शृण्वन्ति। शृण्वन्तोऽपि च—यदि कदाचित् शृण्वन्त्यपि तदा गजनिमीलितेन इव हस्तिनेत्रसंकोचेनेव अवधीरयन्तः अवहेलयन्तः हितोपदेशदायिनः हितोपदेशकान् गुरून् खेदयन्ति दुःखयन्ति। अहंकारेति—हि यस्मात् अहंकार एव दाहज्वरस्तीव्रतापस्तद्धेतुका या मूर्च्छा मोहः तयाऽन्धकारिता अन्धकारवदाचरिता राजप्रकृतिः नृपस्वभावः विह्वला व्याकुला। भवतीति शेषः। अलीकोऽवास्तविकोऽभिमानोऽहंकार उन्मादश्च तौ कर्तुं शीलं येषां तानि धनानि भवन्ति। आलोकयेति—कल्याणाभिनिवेशी कल्याणे मङ्गले श्रेयसि वा अभिनिवेश आग्रहो यस्यैवंभूतः। इयं प्रत्यक्षोपलभ्यमाना (लक्ष्मीः) खड्गानां कौक्षेयकाणां मण्डलं समूह एव उत्पलवनं कमलवनं तत्र विभ्रमभ्रमरी भ्रमणशीला मधुकरी लक्ष्मीः। क्षीरसागरात्स्वोत्पत्तिकारणादित्यर्थः। पारिजातपल्लवेभ्यः मन्दार-

कालकूटान्मोहनशक्तिम्, मदिराया मदम्, कौस्तुभमणेर्नैष्ठुर्यम्, इत्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता। न ह्येवंविधमपरिचितमिह जगति किंचिदस्ति यथेयमनार्या। लब्धापि खलु दुःखेन परिपाल्यते। दृढगुणसंदाननिस्पन्दीकृतापि नश्यति। उद्दामदर्पभटसहस्रोल्लासितासिलतापञ्जरविधृताप्यपक्रामति। मदजलदुर्दिनान्धकारगजघनघटापरिपालितापि प्रपलायते। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। नाचारं पालयति। न सत्यमनुबुध्यते। न लक्षणं

---

किसलयेभ्यो रागं विषयलिप्सामारुण्यं च। इन्दुशकलात् चन्द्रखण्डात् एकान्तवक्रताम् नियतकुटिलतां प्रातिकूल्यं च। उच्चैःश्रवसः इन्द्राश्वात्। कालकूटात् कालकूटनाम्नो विषात् मोहनशक्तिं मूर्च्छोत्पादकशक्तिम्। मदिरायाः मदमुन्मादकताम्। कौस्तुभमणेर्नैष्ठुर्यं काठिन्यम् इत्येतानि सहवासस्य परिचयस्य वशात् कारणात् विरहे वियोगकाले विनोदार्थं मनोविनोदार्थं चिह्नानि गृहीत्वादायैव उद्गता उत्थिता। अयं भावः—लक्ष्मीर्हि क्षीरसागरादुद्भूता, तस्मादेव च पारिजातादीनि समुत्पन्नानि। एवं ह्येतानि सर्वाणि वस्तूनि लक्ष्म्याः सोदराणि सन्ति। अतः तेभ्यः पृथग्भवनकाले मनोविनोदाय तेभ्यः सर्वेभ्यस्तेषां तत्तच्चिह्नमादायैव लक्ष्मीर्जगति समागता। न ह्येवमिति—जगति एवमित्थमपरिचितमसंस्तुतमेकमपि वस्तु नास्ति यथा इयमनार्या दुष्टा। लब्धापि कष्टेन प्राप्तापि यथाकथंचिदियं पुनः पाल्यते रक्ष्यते दुःखेन। पूर्वं तु प्राप्तिरेवास्याः सुदुर्लभा, यदि कथंचिदवाप्येतापि ततो रक्षितुं दुःशका। दृढैः सुदृढैर्गुणैर्दयादानदाक्षिण्यादिरूपै रज्जुभिः यत्संदानं बन्धनं तेन निस्पन्दीकृतापि निश्चलीकृतापि नश्यति प्रपलायते। उद्दाम उत्कटो दर्पो येषां ते उद्दामदर्पास्ते च ते भटाः सैनिकाः तेषां सहस्रेण उल्लासिता उत्थापिता असिलताः खड्गलता एव पञ्जरं तत्र विधृता स्थापितापि अपक्रामति अपसरति। मदजलैर्मदजलरूपैर्दुर्दिनैरन्धकारिणो ये गजास्ते एव घनघटा मेघसमूहाः तैः परिपालितापि रक्षितापि प्रपलायते दूरमपक्रामति। अभिजनं कुलं नेक्षते न पश्यति। अकुलीनस्यापि गृहे सत्त्वादस्याः। रूपं सौन्दर्यं नालोकयति नेक्षते। कुरूपस्यापि गृहे इयं तिष्ठतीति भावः। कुलक्रमं कुलपरिपाटीं नानुवर्तते नानुसरति। शीलं सुस्वभावताम्, वैदग्ध्यं वैदुष्यं न गणयति न विचारयति। श्रुतं शास्त्रश्रवणम्। न धर्मम् अनुरुध्यते अनुगृह्णाति। त्यागं दानं नाद्रियते। कृपण-

प्रमाणीकरोति। गन्धर्वनगरलेखेव पश्यत एव नश्यति। अद्याप्या-रूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति। कमलिनी-संचरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिदपि निर्भरमा-बध्नाति पदम्। अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्ध-गजगण्डमधुपानमत्तेव परिस्खलति। पारुष्यमिवोपशिक्षितुमसि-धारासु निवसति। विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायण-मूर्तिम्। लतेव विटपकानध्यारोहति। गङ्गेव वसुजनन्यपि तरंगबुद्बुदचञ्चला, दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः, पातालगुहेव तमोबहुला, हिडिम्बेव भीमसाहसैकहार्यहृदया,

---

सद्मनि विशेषतस्तस्याः संभवात्। लक्षणं तिलकादि सामुद्रिकशास्त्रप्रतिपादितं न प्रमाणीकरोति न मन्यते। अलक्षणवतोऽपि गृहे तस्या दर्शनात्। गन्धर्वनगरलेखा हरिश्चन्द्रपुरी असद्वस्तुभ्रमो वा। आरूढः प्राप्तः मन्दरेण मेरुणा परिवर्तः मन्दर-परिवर्तः तेन य आवर्तः पयसां भ्रमः तस्माद् भ्रान्तिर्भ्रमणं तज्जनितः तदुत्पादितः संस्कारः वेगाख्यः संस्कारो यस्याः सा श्रीः परिभ्रमति। अर्थात् इयं श्रीर्यदेकत्र चिरं न तिष्ठति तत्रायमेव हेतुरस्ति यत् उत्पत्तिस्थानादेवानया वेगाख्यः संस्कार आधी-यते। इयं लक्ष्मीः क्वचिदपि निर्भरं पदं न निदधाति। हेतुमुत्प्रेक्षते—कमलिनीति—लक्ष्म्याः कमलवासः प्रसिद्धः। कमलिनीषु संचरणव्यतिकरेण परिभ्रमणसंपर्केण लग्नानःलिननालकण्टका यस्याः सा लक्ष्मीरेवंविधा इव क्वचिदपि निर्भरं निश्चलं पदं नाबध्नाति नादधाति। अतीति—विधृता स्थिरीकृता। परमेश्वरगृहेषु धनिक-सद्मसु। विविधा ये गन्धगजा गन्धेभाः, तेषां गण्डस्य मधुपानेन मत्ता इव परिस्खलति। पारुष्येति—पारुष्यं क्रौर्यमिव उपशिक्षितुमभ्यसितुमसिधारासु खड्गधारासु निव-सति। विश्वेति—इयं लक्ष्मीः नारायणस्य श्रीविष्णोर्मूर्तिं शरीरं केवलमेतदर्थमेवाश्रिता यत्ततो विश्वरूपत्वं गृह्णीयात्। विश्वरूपता च श्रियाः प्रसिद्धैव। यथेयं कदाचिद् व्यापारिणां गृहे वाणिज्यलक्ष्मीरूपेण तिष्ठति, कदाचिद्वीराणां राज्ञां गृहे राजलक्ष्मी-रूपेणेत्यादि नानारूपधारणं विश्वरूपधारकस्य विष्णोः सकाशात्। लतेवेति—विटा भाण्डादयस्तान् पान्तीति विटपाः, विटपा एव विटपकाः। स्वार्थे कः। पक्षे विटपा वृक्षाः। अध्यारोहति आश्रयति। गङ्गेवेति—गङ्गा स्वर्धुनी सेव वसु द्रव्यं तज्जनन्यपि तरङ्गा भङ्गा बुद्बुदः स्थासकस्तद्वच्चञ्चला चपला। पक्षे—वसोर्भीष्मस्य (जननी) तरङ्गबुद्बुदाभ्यां चाञ्चल्यवती च। दिवसेति—दिवसकरस्य सूर्यस्य गतिरिव प्रकटिता आविष्कृता विविधेषु जनेषु संक्रान्तिः संचारो यया सा। पक्षे—राशिषु सूर्यसंबन्धः।

प्रावृडिवाचिरद्युतिकारिणी, स्वल्पसत्त्वमुन्मत्तीकरोति । सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति । जनं गुणवन्तमपवित्रमिव न स्पृशति । उदारसत्त्वममङ्गलमिव न बहु मन्यते । सुजनमनिमित्तमिव न पश्यति । अभिजातमहिमिव लङ्घयति । शूरं कण्टकमिव परिहरति । दातारं दुःस्वप्नमिव न स्मरति । विनीतं पातकिनमिव नोपसर्पति । मनस्विनमुन्मत्तमिवोपहसति । परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजं चरितम् । तथा हि—संततमूष्माणमुपजनयन्त्यपि जाड्यमुपजनयति । उन्नतिमादधानापि नीचस्वभावतामाविष्करोति । तोयराशिसंभवापि तृष्णां संवर्धयति । ईश्वरतां दधानाप्यशिवप्रकृतित्वमातनोति । बलोपचयमाहरन्त्यपि लघिमानमापादयति । अमृतसहोद-

---

पातालेति—पातालं वडवामुखं तस्य गुहा कन्दरा सेव तमोबहुला अन्धकारप्राया । लक्ष्मीश्च तमोगुणबहुला । हिडिम्बेति—हिडिम्बेव घटोत्कचप्रसूरिव । भीमसाहसेन अतिकठिनकर्मणा एकमद्वितीयं हार्यं हर्तुं योग्यं हृदयं यस्याः सा लक्ष्मीः । हिडिम्बापक्षे तु—भीमस्य वृकोदरस्य यः साहसगुणस्तेन हार्यं हृदयं यस्याः सा । प्रावृडिवेति—प्रावृड् वर्षाकाल इव अचिरं स्वल्पकालं द्युतिं प्रकाशं कर्तुं शीलं यस्याः सा । वर्षापक्षे—अचिरद्युतिर्विद्युत् । सरस्वतीति—गृहीतं स्वीकृतम् । गुणवन्तं शौर्यादि गुणोपेतं जनम् । उदारसत्त्वं महामनसम् । अमङ्गलमिव न बहु मन्यते नाद्रियते । अनिमित्तमिव अशकुनमिव अफलमिव वा । निमित्तं हेतौ शकुने फले इत्यादीति शब्दार्थचिन्तामणिः । अभिजातं कुलीनम् । अहिमिव सर्पमिव लङ्घयति अतिक्रामति । दातारं वदान्यम् । दुःस्वप्नमिव अशुभस्वप्नमिव न स्मरति । पातकिनमिव पापकारिणमिव । परस्परेति—इन्द्रजालमिव कुहकमिव परस्परविरुद्धमन्योन्यविपरीतं दर्शयन्ती प्रकटयन्ती जगति निजं चरितं प्रकटयति आविष्करोति । संततमनारतम् । ऊष्माणं तापमुपजनयन्ती जनयन्ती अपि जाड्यं शैत्यं जनयतीति विरोधः । परिहारस्तु जाड्यं सदसद्विवेकराहित्यम् । तोयेति—तोयराशिसंभवा समुद्रोत्पन्नापि तृष्णां पिपासां संवर्धयति । परिहारपक्षे तृष्णां गार्ध्यम् । ईश्वरतामिति—ईश्वरतां दधाना धारयन्त्यपि अशिवप्रकृतित्वमनीश्वरस्वभावतामातनोति इति विरोधः । ईश्वरः शिवः । परिहारस्तु–ईश्वरतां प्रभुतामशिवमशुभमिति । बलेति—बलस्य उपचयो वृद्धिस्तमाहरन्ती धारयन्ती अपि लघिमानं लघुत्वमापादयति प्रापयतीति विरोधः । परिहारस्तु बलस्य सैन्यस्य उपचयः समूहः । लघिमानं

रापि कटुकविपाका, विग्रहवत्यप्यप्रत्यक्षदर्शना, पुरुषोत्तमरतापि खलजनप्रिया, रेणुमयीव स्वच्छमपि कलुषीकरोति। यथायथा चेयं चपला दीप्यते तथातथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति । तथा हि—इयं संवर्धनवारिधारा तृष्णाविषवल्ली-नाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरित-चित्राणाम्, विभ्रमशय्या मोहदीर्घनिद्राणाम्, निवासजीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्, पुरःपताका सर्वाविनयानाम्, उत्पत्तिनिम्नगा क्रोधावेगग्राहाणाम्, आपान-भूमिर्विषयमधूनाम्, संगीतशाला भ्रूविकारनाट्यानाम्, आवासदरी दोषाशीविषाणाम्, उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम्, अकालप्रावृड् गुणकलहंसकानाम्, विसर्पणभूमिर्लोकापवादवि-

---

कार्पण्यम् । अमृतेति—अमृतसहोदरापि अमृतेन साकमुत्पन्नापि कटुकरसोपेतो विपाको यस्या इति विरोधः । परिहारस्तु कटुको दुःखदायी । विग्रहेति—विग्रहवती मूर्तिमती अपि अप्रत्यक्षमिन्द्रियागोचरं दर्शनं यस्या इति विरोधः । परिहारः विग्रहवती कलहवती । पुरुषेति—पुरुषोत्तमो जनश्रेष्ठस्तत्र रतापि खलजनानां दुर्जनानां प्रिया इति विरोधः । परिहारपक्षे—पुरुषोत्तमो विष्णुः । रेणुमयीति—रेणुमयी धूलि-मयीव स्वच्छमपि कलुषीकरोति मालिन्यमापादयति । तृष्णैव विषवल्ल्यो गरललताः तासां संवर्धनवारिधारा संवर्धनार्थं पोषणार्थं वारिधारा जलधारेवास्ति । इन्द्रियाणि चक्षुरादीनि एव मृगास्तेषां प्रलोभनार्थं व्याधगीतिः मृगवधजीविगानम् । सच्चरितानि सदाचरणान्येव चित्राणि तेषां परामर्शार्थं प्रोञ्छनार्थं धूमलेखा धूमपङ्क्तिरस्ति । मोहो मौढ्यमेव दीर्घनिद्रा तत्कृते विभ्रमशय्या विलासशयनम् । निवासेति—धनमदा एव पिशाचिकास्तासां निवासार्थं जीर्णवलभी जीर्णा पुरातनी वलभी गृहोपरिभागः । तिमिरेति—शास्त्रदृष्टीनां शास्त्राण्येव दृष्टयस्तासां तिमिरस्य नेत्ररोगविशेषस्य उद्गतिः प्रादुर्भावः । पुर इति—सर्वेषामविनयानां पुरःपताका अग्रवैजयन्ती । उत्पत्तीति—क्रोधस्य कोपस्य य आवेगा आवेशा त एव ग्राहा जलजन्तवस्तेषाम् उत्पत्तिनिम्नगा तटिनी । विषयाः कामादय एव मधूनि मद्यानि तेषामापानभूमिः पानगोष्ठीस्थानम् । संगीतेति—भ्रूविकारा एव नाट्यानि तेषां संगीतशाला रङ्गशाला । दोषा दूषणान्येव आशीविषाः सर्पाः तेषामावासार्थं निवासार्थं दरी गुहा । 'आशीविषो विषधरश्चक्री व्यालः सरीसृपः' इत्यमरः । सत्पुरुषाणां सज्जनानां व्यवहारा आचरणानि तेषाम् उत्सारणार्थं वेत्रलता वेत्रयष्टिः । गुणाः शौर्यादय एव कलहंसाः कादम्बाः तेषां

स्फोटकानाम्, प्रस्तावना कपटनाटकस्य, कदलिका कामकरिणः, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य । न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढः, यो वा न विप्रलब्धः । नियतमियमालेख्यगतापि चलति, पुस्तकमय्यपीन्द्र-जालमाचरति, उत्कीर्णापि विप्रलभते, श्रुताप्यभिसंधत्ते, चिन्तितापि वञ्चयति । एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः, सर्वाविनयाधिष्ठानतां च गच्छन्ति। तथा हि—अभिषेकसमय एव चैतेषां मङ्गलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम्, अग्निकार्यधूमेनेव मलिनीक्रियते हृदयम्, पुरोहितकुशाग्रसंमार्जनीभिरिवापह्रियते क्षान्तिः, उष्णीषपट्टबन्धे-नेवाच्छाद्यते जरागमनस्मरणम्, आतपत्रमण्डलेनेवापसार्यते पर-लोकदर्शनम्, चामरपवनैरिवापह्रियते सत्यवादिता, वेत्रदण्डैरि-

---

पलायनार्थम् इयं लक्ष्मीरकालप्रावृट् अकालवर्षा एव वर्तते । प्रावृषि हंसा नेह तिष्ठन्ति। सर्वगुणविनाशिका लक्ष्मीरिति भावः । लोकापवादो लोकनिन्दा एव विस्फोटका व्रणविशेषाः तेषां विसर्पणभूमिः विस्तरणस्थलम् । कपटनाटकस्य कैतवनृत्यस्य प्रस्तावना प्रारम्भः । काम एव करी तस्य कृते कदलिका रम्भा । कदलीवनं करिणः प्रियं वस्तु । साधुभावस्य शोभनाध्यवसायस्य वध्यशाला सूनास्थानम् । धर्मः सदा-चारः एव इन्दुमण्डलं चन्द्रमण्डलं तस्य ग्रहणार्थं राहुजिह्वा सैंहिकेयरसना । निर्भर-मतिशयं नोपगूढः नाश्लिष्टः । विप्रलब्धः विप्रतारितः । नियतं निश्चितम् । आलेख्य-गता चित्रिता । पुस्तकमयी ज्ञानमयी अपि इन्द्रजालवज्जालमाचरति । उत्कीर्णापि उल्लिखिता कृतवेधना वा अपि विप्रलभते विप्रतारयति । श्रुतापि आकर्णि-तापि अभिसंधत्ते कपटव्यवहारं करोति । वञ्चयति विप्रतारयति । विक्लवा विह्वलाः । अधिष्ठानतामधिकरणताम् । अभिषेकसमय एव राज्यारोहणकालीनस्नानसमय एव । मङ्गलकलशजलैः कल्याणकलशसलिलैः । दाक्षिण्यमनुकूलता प्रक्षाल्यते प्रमृज्यते । राज्याभिषेककाले होमोऽपि क्रियते । तत्र अग्निकार्यस्याग्निहोत्रस्य धूमेन हृदयं राज्ञां चित्तं मलिनीक्रियते । पुरोहितस्य पुरोधसः कुशाग्राण्येव संमार्जन्यस्ताभिः क्षान्तिः क्षमा अपह्रियते दूरीक्रियते । उष्णीषं शिरोवेष्टनमेव पट्टबन्धस्तेनेव जराया वार्धक्यस्य आगमनस्य स्मरणमाच्छाद्यते आव्रियते । आतपत्रमण्डलेन छत्रधारणेनेव परलोकदर्शनं जन्मान्तरावलोकनम् अपसार्यते दूरीक्रियते । अभिषेककाले चामरैरपि राजानो वीज्यन्ते तत्रोत्प्रेक्षामाह—चामरपवनैर्बालव्यजनैरिव सत्यवादिता सत्यभाषणशीलता अपह्रियते

वोत्सार्यन्ते गुणाः, जयशब्दकलकलरवैरिव तिरस्क्रियन्ते साधुवादाः, ध्वजपटपल्लवैरिव परामृश्यते यशः। एते खलु ग्रहैरिव गृह्यन्ते, भूतैरिवाभिभूयन्ते, मन्त्रैरिवावेश्यन्ते, सत्त्वैरिवावष्टभ्यन्ते, वायुनेव विडम्ब्यन्ते, पिशाचैरिव ग्रस्यन्ते, मदनशरैर्मर्माहता इव मुखभङ्गसहस्राणि कुर्वते, धनोष्मणा पच्यमाना इव विचेष्टन्ते, गाढप्रहाराहता इवाङ्गानि न धारयन्ति, कुलीरा इव तिर्यक्परिभ्रमन्ति, अधर्मभग्नगतयः पङ्गव इव परेण संचार्यन्ते, मृषावादविपाकसंजातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति, सप्तच्छदतरव इव कुसुमरजोविकारैः पार्श्ववर्तिनां शिरःशूलमुत्पादयन्ति, आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति, उत्कम्पितलोचना इव तेजस्विनो नेक्षन्ते, दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशम्, तृष्णाविषमूर्च्छिताः कनकमयमिव सर्वं पश्यन्ति, इषव इव पानवर्धिततैक्ष्ण्याः परप्रेरिता

---

दूरीक्रियते। वेत्रदण्डैर्वेतसयष्टिभिरिव गुणा दाक्षिण्यादय उत्सार्यन्ते अपसार्यन्ते। जयशब्दानां कलकलरवैः कोलाहलध्वनिभिरिव साधुवादाः ख्यातयः तिरस्क्रियन्ते न्यक्क्रियन्ते। ध्वजा वैजयन्त्यस्तेषां पटा वस्त्राणि तेषां पल्लवैः प्रान्तैरिव यशः कीर्तिः परामृश्यते प्रोञ्छ्यते। ग्रहैः शनैश्चरादिभिरिव गृह्यन्ते वशीक्रियन्ते। भूतैः देवयोनिविशेषैः इव अभिभूयन्ते पराभूयन्ते। मन्त्रैः देवादीनां साधनैः इव आवेश्यन्ते अभिनिवेश्यन्ते। सत्त्वैः दुष्टप्राणिभिरिव अवष्टभ्यन्ते हठेन गृह्यन्ते। वायुना पवनेन इव विडम्ब्यन्ते इतस्ततो विक्षिप्यन्ते। पिशाचैरिव राक्षसैरिव ग्रस्यन्ते भक्ष्यन्ते। मदनशरैः कामबाणैः मर्माहता मर्मणि ताडिता इव मुखभङ्गसहस्राणि आननविकृतिसहस्राणि कुर्वते कुर्वन्ति। धनोष्मणा वित्ततापेन। गाढस्तीव्रो यः प्रहारो लगुडादिना ताडनं तेन आहता इव। कुलीराः कर्कटाः। राजादयः परिचारकमन्तरा न गच्छन्ति इति हेतोः परेणेत्युक्तम्। मृषावादोऽनृतभाषणम्। अतिकृच्छ्रेण अतिकष्टेन। सप्तच्छदेति—सप्तच्छदतरव इव सप्तपर्णवृक्षा इव। 'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति हेमः। तेजस्विनः सूर्यादीन् प्रतापवतः पुरुषांश्च। उत्कंपिते लोचने येषां ते। यथा रुग्णनेत्राः पुरुषास्तेजस्विनः सूर्यादीन् नेक्षितुमीशते तैथव इमे राजानोऽपि प्रतापशालिनो नरान्नेक्षितुमलम्। दुष्टवारणा मदोन्मत्तगजाः। गजपक्षे—महन्मानं यस्यैवंविधो यः स्तम्भः आलानस्तम्भः तेन निश्चलीकृता नद्धाः सन्तः उपदेशं हस्तिपकवाक्यं न गृह्णन्ति। तृष्णैव लिप्सैव विषं गरलं तेन मूर्च्छिताः भ्रान्ताः कनकमयं

विनाशयन्ति, दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति, अकालकुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः श्मशानाग्नय इवातिरौद्रभूतयः, तैमिरिका इवादूरदर्शिनः, उपसृष्टा इव क्षुद्राधिष्ठितभवनाः श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति, चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति, अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो भवन्ति, तदवस्थाश्च व्यसनशतसंख्यतामुपगता वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति। अपरे तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीधूर्तबकैर्द्यूतं विनोद

---

सुवर्णमयमिव सर्वं पश्यन्ति। इषव इति—पानं मधुपानं निशानघर्षणं च ताभ्यां वर्धितं तैक्ष्ण्यं मदक्रौर्यं प्रहारशक्तिश्च येषामेवंविधा इषव इव परोऽन्यो मन्त्री च ताभ्यां प्रेरिता नोदिता विनाशयन्ति यथा दूरस्थितानि वृक्षशिखरस्थितान्यपि फलानि आम्रादीनि दण्डविक्षेपैः यष्ट्यादिप्रक्षेपैः शातयन्ति पातयन्ति तथैवामी राजानोऽपि दूरस्थितान्यपि दविष्ठदेशवर्तीन्यपि महाकुलानि महाभिजनानि शातयन्ति पीडयन्ति। अकालेति—मनोहराश्चित्तहारिण्य आकृतय आकारा येषामेवंविधा अपि लोकविनाशहेतवः संसारध्वंसकारणानि भवन्ति। अकाले असमये विनैव ऋतुमित्यर्थः। कुसुमप्रसवा इव प्रसूनोत्पत्तय इव। उक्तं च—'द्रुमौषधिविशेषाणामकाले कुसुमोद्गमः। फलप्रसवयोर्बन्धं महोत्पातं विदुर्बुधाः'। श्मशानं प्रेतवनं तस्य अग्नय इव अतिरौद्रा अन्येषामुद्वेजका भूतिः संपत् येषां ते। अन्यत्र भूतिर्भस्म येषां ते। तैमिरिका इति—तिमिरं नेत्ररोगः स संजातो येषां ते तैमिरिकाः त एवादूरदर्शिनः। भाविनं दोषं न पश्यन्ति। पक्षे-दूरं न पश्यन्ति। उपेति—उपसृष्टा रतिसंलग्ना वाराङ्गना इव क्षुद्रैर्नीचैर्लोकैः। पक्षे विटैरधिष्ठितानि भवनानि येषां ते। 'उपसृष्टं तु मैथुनम्' इति त्रिकाण्डशेषः। श्रूयमाणेति—श्रूयमाणा आकर्ण्यमाना अपि प्रेतपटहा इव मृतकवाद्यानीव। क्वचित् क्वचित् मृतकानां पुरस्तात् वाद्यानि वाद्यन्ते। अनुदिवसं प्रतिदिनम्। आध्मातमूर्तयः स्थूलदेहाः। तदवस्थाश्च सा अवस्था येषां ते तदवस्थाः सन्तः। व्यसनानां द्यूतादीनां शतं तस्य सख्यतां मित्रत्वमुपगताः प्राप्ताः वल्मीकोपरि ( कीटविशेषेण निःसारितमृत्तिकाराशिर्वल्मीकः ) उत्पन्ने तृणाग्रे स्थिता जलबिन्दव इव पतितमपि ( मनुष्यजन्मन इति शेषः ) आत्मानं स्वं नावगच्छन्ति। न जानन्ति। स्वार्थनिष्पादनपरैः स्वार्थस्य स्वप्रयोजनस्य निष्पादने संपादने परैः परायणैः धनं वित्तमेव पिशितं मांसं तस्य ग्रासगृध्रैः अभिलाषुकैः। आस्थानं नृपोपवेशनस्थलं तदेव नलिनी

इति, परदाराभिगमनं वैदग्ध्यमिति, मृगयां श्रम इति, पानं विलास इति, प्रमत्ततां शौर्यमिति, स्वदारपरित्यागमव्यसनितेति, गुरुवचनावधीरणमपरप्रणेयत्वमिति, अजितभृत्यतां सुखोपसेव्यत्वमिति, नृत्तगीतवाद्यवेश्याभिसक्तिं रसिकतेति, महापराधानाकर्णनं महानुभावतेति, पराभवसहत्वं क्षमेति, स्वच्छन्दतां प्रभुत्वमिति, देवावमाननं महासत्त्वतेति, वन्दिजनख्यातिं यश इति, तरलतामुत्साह इति, अविशेषज्ञतामपक्षपातित्वमिति, दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषलोकोचिताभिः स्तुतिभिः प्रतार्यमाणा वित्तमदमत्तचित्ता निश्चेतनतया तथैवेत्यात्मन्यारोपितालीकाभिमाना मर्त्यधर्माणोऽपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणा प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपहास्यतामुपयान्ति ।

---

कमलिनी तस्यां वकैर्धूर्तैः । यथा वका नलिनीमाश्रित्य तदाश्रयबलेन स्वात्मानमाच्छाद्य येन केन प्रकारेण परान् वञ्चयित्वाऽकस्मादेव परान् भक्षयन्ति तद्वत् । द्यूतं दुरोदरम् । परदाराः परस्त्रियः तेषामभिगमनं संभोगो वैदग्ध्यं चातुर्यम् । मृगयामाखेटं श्रम इति व्यायाम इति । पानं मद्यादीनां पानं विलासो विलसितम् । प्रमत्ततां क्षीबतां शौर्यं सुभटकृत्यम् । स्वदाराणां स्वस्त्रियास्त्यागम् अव्यसनिता व्यसनराहित्यमनासक्तता वा । गुरुवचनानामवधीरणमवहेलनम् । परप्रणेयत्वं परवशता तद्राहित्यं स्वातन्त्र्यमित्यर्थः । अजितेति—शिक्षार्थं ताडिता भृत्या यस्य राज्ञः सम्यक् सेवां विदधति स जितभृत्य इत्युच्यते । तद्विपरीतोऽजितभृत्यः । तस्य भावस्तत्ता । राज्ञो दूषणमिदम् । वैगुण्ये राज्ञावश्यं भृत्या भर्त्सनीया इति राज्ञो गुणः । सुखेनानायासेनोपसेव्यः सेवितुं योग्यस्तस्य भावस्तत्त्वम् । अनाकर्णनमुपेक्षा । पराभवस्यावमानस्य सहत्वं क्षमेति क्षान्तिरिति । स्वच्छन्दतां स्वैरताम् । ख्यातिं स्तुतिम् । अविशेषज्ञतां गुणावगुणानभिज्ञताम् । प्रतारणकुशलैः वञ्चनानिपुणैः । प्रतार्यमाणाः वञ्च्यमानाः । वित्तस्य धनस्य मदेन गर्वेण मत्तं प्रमत्तं चित्तं चेतो येषां ते । निश्चेतनतया ज्ञानरहितत्वेन तथैव आत्मनि स्वस्मिन् आरोपितः स्थापितः अलीकाभिमानः मिथ्याभिमानः यैस्ते तथाभूताः मर्त्यधर्माणोऽपि मानुषा अपि सन्तः । दिव्यः अंशः अवतीर्णो यस्मिन् । सदैवतमिव देवताधिष्ठितमिव । अतिक्रान्तो मानुषानिति अतिमानुषमिव आत्मानम् । उत्प्रेक्षमाणाः पश्यन्तः प्रारब्धाः कर्तुमारब्धा या दिव्योचिताश्चेष्टास्ताभिरनुभावो माहात्म्यं येषां ते । सर्वजनस्य सर्वेषां मनुष्याणामुपहास्यतामुपहासास्पदतामुपयान्ति ।

आत्मविडम्बनां चानुजीविना जनेन क्रियमाणामभिनन्दन्ति। मनसा देवताध्यारोपणविप्रतारणादसद्भूतसंभावनोपहताश्चान्तः-प्रविष्टापरभुजद्वयमिवात्मबाहुयुगलं संभावयन्ति। त्वगन्तरिततृतीयलोचनं स्वललाटमाशङ्कन्ते। दर्शनप्रदानमप्यनुग्रहं गणयन्ति। दृष्टिपातमप्युपकारपक्षे स्थापयन्ति। संभाषणमपि संविभागमध्ये कुर्वन्ति। आज्ञामपि वरप्रदानं मन्यन्ते। स्पर्शमपि पावनमाकलयन्ति। मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजातीन्, न मानयन्ति मान्यान्, नार्चयन्त्यर्चनीयान्, नाभिवादयन्त्यभिवादनार्हान्, नाभ्युत्तिष्ठन्ति गुरून्, अनर्थकायासान्तरितोपभोगसुखमित्युपहसन्ति विद्वज्जनम्, जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धोपदेशम्, आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय, कुप्यन्ति हितवादिने। सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्धयन्ति, तेन सह सुखमवतिष्ठन्ते, तस्मै ददति, तं मित्रतामुपजनयन्ति, तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, तं बहु मन्यन्ते, तमाप्ततामापादयन्ति, योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति, यो वा माहात्म्यमुद्भावयति। किं वा तेषां सांप्रतं येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटल्यशास्त्रं प्रमाणम्, अभिचारक्रियाः क्रूरैकप्रकृ-

---

अनुजीविना जनेन सेवकजनेन। मनसा स्वचेतसा देवताध्यारोप आत्मनो देवत्वेन निश्चय एव प्रतारणा तया असंभूता या संभावना आत्मनि देवत्वभावनं तेनोपहताः सन्तः आत्मनः स्वस्य बाहुयुगलं भुजद्वयमन्तः मध्ये प्रविष्टमपरं भुजद्वयं यत्र तत् इव संभावयन्ति। त्वचि अन्तरितं तिरोहितं तृतीयं लोचनं यत्र तत् स्वललाटं निजभालमाशङ्कन्ते। संविभागः पारितोषिकं दानम्। द्विजातीन् विप्रान्। अर्चनीयान् सत्करणीयान्। गुरून् हितोपदेशदायिनः। अनर्थको व्यर्थो य आयासः श्रौतस्मार्तकर्मणि क्लेशस्तेनान्तरितं व्यवहितमुपभोगसुखं विषयोपभोगानन्दो यस्य तं तथाविधं मत्वा। वृद्धोपदेशं स्थविराणां हितोपदेशं जराया वृद्धत्वस्य वैक्लव्येन विकलतया प्रलपितमिति मत्वा अवहेलयन्ति। हितवादिने यथास्थितं यो वदति तस्मै कुप्यन्ति क्रुध्यन्ति। अभिनन्दन्ति प्रशंसन्ति। वर्षन्ति पुनः पुनः ददति। आप्ततां विश्वासाधारताम्। सांप्रतं युक्तम्। अतिनृशंसप्रायः अतिक्रूरबहुल उपदेशः शिक्षा यत्र तथाविधं निर्गता घृणा दया यस्मादित्थंभूतं च कौटल्यशास्त्रं चाणक्यादिप्रणीतं नीति-

तयः पुरोधसो गुरवः, पराभिसंधानपरा मन्त्रिण उपदेष्टारः, नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिः, मारणात्मकेषु शास्त्रेष्वभियोगः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः। तदेवंप्रायातिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन्महामोहकारिणि च यौवने कुमार! तथा प्रयतेथा यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे सुहृद्भिः, न शोच्यसे विद्वद्भिः। यथा च न प्रकाश्यसे विटैः, न प्रहस्यसे कुशलैः, नास्वाद्यसे भुजंगैः, नावलुप्यसे सेवकवृकैः, न वञ्च्यसे धूर्तैः, न प्रलोभ्यसे वनिताभिः, न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयैः, नावकृष्यसे रागेण, नापह्रियसे सुखेन। कामं भवान्प्रकृत्यैव धीरः, पित्रा च समारोपितसंस्कारः, तरलहृदयमप्रतिबुद्धं च न मदयन्ति धनानि, तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनःपुनरभिधीयसे। विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्नवयौवराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय स्वबन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुंधराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति इत्येतावदभिधायोपशशाम। उपशान्तवचसि शुकनासे

---

शास्त्रं प्रमाणम्। अभिचारः परहिंसा श्येनयागादिरूपपरवधजनकक्रूरकृत्यम्। पुरोधसः पुरोहिताः। अभिसंधानं प्रतारणम्। तत्र पराः परायणाः। पूर्वं भुक्ता पश्चादुज्झिता त्यक्ता। अभियोग उद्यमः। सहजेन स्वाभाविकेन प्रेम्णा स्नेहेनार्द्रं हृदयं येषां ते। उच्छेद्या उन्मूलनीयाः। राज्यतन्त्रे राज्यस्य तन्त्रमितिकर्तव्यता तत्र। महामोहकारिणि महामोहं महामौढ्यं कर्तुं शीलं यस्य तत्र। विटैः धूर्तैः। भुजंगैर्गणिकापतिभिर्न आस्वाद्यसे गणिकार्थं द्रव्यवितरणद्वारा नोपभुज्यसे। वनिताभिः स्त्रीभिः। मदेन आधिपत्यजनिताहंकारेण। मदनेन कामेन। रागेण स्नेहादिना। ऊढां कुलक्रमागताम्। सप्त सप्त संख्याका द्वीपा जम्बूप्रभृतयो यस्यां सा तां वसुंधरां

चन्द्रापीडस्ताभिरुपदेशवाग्भिः प्रक्षालित इव, उन्मीलित इव, स्वच्छीकृत इव, निर्मृष्ट इव, अभिषिक्त इव, अभिलिप्त इव, अलंकृत इव, पवित्रीकृत इव, उद्भासित इव, प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम ।

---

पृथ्वीं विजयस्व । त्रैलोक्यदर्शीव योगीव । उन्मीलितः विकसित इव । अभिषिक्तः स्नपितः । अभिलिप्तः प्रलिप्तः ।

# हर्षचरिते सप्तम उच्छ्वासः

अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम्।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥१॥
धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्यम्।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥२॥

## श्रीहर्षस्य शुभमुहूर्ते नगरात् प्रस्थानम्।

अथ व्यतीतेषु च केषुचिद् दिवसेषु, मौहूर्तिकमण्डलेन शतशः सुगणिते सुप्रशस्तेऽहनि, दत्ते चतसृणामपि दिशां विजय-

---

इह हि श्रीहर्षचरितस्य सप्तमपरिच्छेदे नायकस्य विजययात्रासमारोहं विवर्णयिषुर्महाकविर्भट्टबाणो भाविकथाप्रसङ्गं पद्यद्वयेन सूचयति—अङ्गनवेदीति—कृता प्रतिज्ञा येन तस्य वीरस्य शूरस्य कृते इयं वसुधा पृथिवी अङ्गनवेदी गृहाजिरप्रान्त एव भवति। वीरस्य अपकारं कृत्वा पृथिव्या गहनतमकोणे निलीनोऽपि रिपुर्गृहाजिरे विद्यमान इव निगृह्यते इत्याशयः। मध्ये पतितो जलधिः समुद्रोऽपि तस्य कृते कुल्या अल्पा कृत्रिमा सरित् भवति। पातालं, दुर्गमत्वेन प्रसिद्धो नागलोकोपि, स्थली भूमिः तद्वत् सुखसाध्यो जायते। सुमेरुस्तन्नाम्ना ख्यातः स्वर्णपर्वतोपि वल्मीकवत् लीलालंघनीयो भवति। 'कुल्याऽल्पा कृत्रिमा सरित्'। 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः। अत्र रूपकालंकारः। आर्या च छन्दः।

धृतधनुषीति—बाहुभ्यां भुजाभ्यां शालते शोभते इति बाहुशाली तस्मिन् वीरे धृतधनुषि सति गृहीतचापे युद्धाय सज्जे सतीत्याशयः, तत्त्रासात् यत् शैलाः पर्वता न नमन्ति अयमेव तावदाश्चर्यविषयः। रिपुसंज्ञकेषु शत्रुनामकेषु वराकेषु दीनेषु काकेषु काकतुल्येषु कापुरुषेषु तु कैव गणना का आस्था को वा आदरः। यथा हि काकाः समवायेषु संगताः सन्तः कर्णकटुरटनं समाचरन्ति न तु शत्रोः किमप्यनिष्टं चेष्टितुं शक्नुवन्ति तथैव ये क्षुद्राः शत्रवः केवलं कोलाहलमेव कुर्वन्ति न तु प्रतीकारं ते काकपदवाच्याः। अत्रापि पूर्ववदेव रूपकालंकारः, आर्या च छन्दः।

अथेति—षष्ठोच्छ्वासावसाने निर्दिष्टानां प्रतिसामन्तगृहेषु जायमानानां दुर्निमित्तानामवसरे इत्यर्थः। व्यतीतेषु केषुचिद्दिवसेषु, मौहूर्तिकानां गणकानां मण्डलेन गणेन शतशो बहुशः सम्यक् गणिते संकलिते सुप्रशस्ते शोभने अहनि दिवसे, चतसृणां

योग्ये दण्डयात्रालग्ने, सलिलमोक्षविशारदैः शारदैरिवाम्भोधरैः कालधौतैः शातकौम्भैश्च कुम्भैः स्नात्वा, विरचय्य परमया भक्त्या भगवतो नीललोहितस्यार्चाम्, उदर्चिषं हुत्वा प्रदक्षिणावर्तशिखाकलापम् आशुशुक्षणिं, दत्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयानि च सहस्रशस्तिलपात्राणि, कनकपत्रलताऽलंकृतशफशृंगशिखरा गाश्चार्बुदशः, समुपविश्य

---

दिशां विजययोग्ये दण्डयात्रालग्ने—दण्डस्य सैन्यस्य यात्रा प्रस्थानं तदर्थं योग्ये लग्ने मेषवृषादिकाले दत्ते निरूपिते सति । यस्मिन् हि मुहूर्ते विजययात्रार्थं प्रस्थितस्य सर्वत्र निर्बाधो विजयलाभः स्यात् तादृशे काले गणकैर्निर्दिष्टे सतीत्यर्थः । सलिलस्य जलस्य मोक्षेण त्यागेन विशारदैः शुभ्रैः शारदैः शरत्कालिकैः कालेन वर्षापगमकालेन धौतैः क्षालितैः अम्भोधरैः मेघैरिव । पक्षे च कलधौतरचितैः रजतमयैरित्यर्थः । सलिलपक्षे जलक्षरणे विशारदैः कुशलैः सौकर्येण जलक्षरणकरैः शातकौम्भैः स्वर्णमयैः कुम्भैः कलशैः स्नात्वा, परमया श्रद्धया भगवतो नीललोहितस्य शिवस्य अर्चां पूजां संपाद्य । शिवो हि कण्ठे नीलो जटासु च लोहितस्तेन नीललोहित उच्यते । 'कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः' इत्यमरः । 'उत्पत्तिं च विनाशं च भूतानामगतिं गतिम् । वेत्ति विद्यामविद्यां च यो हि स भगवान् स्मृतः ।' अथवा 'ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ तत्संपन्नो हि भगवान् । उद्गता अर्चिषः शिखाः यस्य, प्रदक्षिणम् आवर्तते इति प्रदक्षिणावर्तस्तथाविधः शिखाकलापो यस्य तम् । 'वह्नेर्द्वयो ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः । यस्य वह्नेर्ज्वालाः प्रदक्षिणं परिभ्रमन्ति स मंगलकारी भवति । यथा रघौ कालिदासः—"तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ । प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥" आशुशुक्षुणिः अग्निः । 'रोहिताश्वो वायुसखः शिखावानाशुशुक्षुणिः' इत्यमरः । राजतानि रजतमयानि, जातरूपं सुवर्णम् 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकौम्भं गांगेयं भर्म कर्बुरं । चामीकरं जातरूपं महारजतकाञ्चने । रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः । स्वर्णमयानि च तिलपात्राणि तिलपरिपूर्णानि भाजनानि । तिलैः पूर्णानां हेमपात्राणां दानं कविना कादम्बर्यामपि वर्णितम्, यथा—"प्रतिदिवसमुत्थायोत्थाय सर्वरत्नोपेतानि हैमानि तिलपात्राणि तिलपरिपूर्णानि भाजनानि ब्राह्मणेभ्यो ददौ" इत्यादि । कनकमयीभिः पत्रलताभिरलंकृतानि शफशृंगशिखराणिशफ विषाणाग्राणि यासां ताः । अर्बुदशः गाः धेनूः द्विजेभ्यो दत्वा । 'अर्बुदं

विततव्याघ्रचर्मणि भद्रासने, विलिप्य प्रथमविलिप्तायुधो निजयशोधवलेनाचरणतश् चन्दनेन शरीरं, परिधाय राजहंसमिथुनलक्ष्मणी सदृशे दुकूले, परमेश्वरचिह्नभूतां शशिकलामिव कल्पयित्वा सितकुसुममुण्डमालिकां शिरसि नीत्वा, कर्णाभरणमरकतमयूखमिव कर्णगोचरतां गोरोचनाच्छुरितम् अभिनवं दूर्वापल्लवं, विन्यस्य सह शासनवलयेन गमनमङ्गलप्रतिसरं प्रकोष्ठे, परिपूजितप्रहृष्टपुरोहितकरप्रकीर्यमाणशान्तिसलिलसीकरनिकराभ्युक्षितशिराः संप्रेष्य महार्हाणि वाहनानि, बहलरत्नालोक-

---

दशकोटयः' । अत्र बह्वर्थे । विततं विस्तीर्णं व्याघ्रस्य चर्म अजिनं यस्मिन् तस्मिन् भद्रासने सिंहासने समुपविश्य, निजयशोवद्धवलेन शुभ्रेण चन्दनेन प्रथमं विलिप्तानि चर्चितानि, आयुधानि शस्त्राणि येन सः, आचरणतः चरणपर्यन्तं स्वशरीरमपि तेनैव चन्दनेन विलिप्य राजहंसयुगलस्य लक्ष्म चिह्न ययोस्ते, सदृशे स्वानुरूपे दुकूले क्षौमवाससी परिधाय धारयित्वा परमेश्वरस्य शिवस्य, पक्षे राज्ञो वा चिह्नभूतां शशिनः कलामिव सितकुसुमानां धवलपुष्पाणां मुण्डमालिकां शिरोमालिकां शिरसि मूर्ध्नि कल्पयित्वा धृत्वा । कर्णाभरणीकृतस्य अवतंसीकृतस्य मरकताख्यहरितरत्नस्य मयूखमिव रश्मिमिव गोरोचनया छुरितं व्याप्तं दूर्वापल्लवं कर्णगोचरतां नीत्वा कर्णे निवेश्य शासनवलयेन सह मुद्राकटकेन सह गमनमंगलप्रतिसरमपि गमनवेलायां मङ्गलार्थं बद्धं प्रतिसरं कङ्कणम् प्रकोष्ठे विन्यस्य संस्थाप्य । इदं हि शासनवलयं राज्याभिषेकावसरे राजभ्यः प्रदीयते । यथा रघौ षोडशसर्गे—

'यत्कुम्भयोनेरधिगम्य रामः कुशाय राज्येन समं दिदेश ।
तदस्य जैत्राभरणं विहर्तुरज्ञातपातं सलिले ममज्ज ॥
स्नात्वा यथाकाममसौ सदारस्तीरोपकार्यां गतमात्र एव ।
दिव्येन शून्यं वलयेन बाहुमपोढनेपथ्यविधिर्ददर्श ॥

( सर्ग १६, श्लो० ७२, ७३ )

परिपूजितोऽत एव प्रहृष्टः प्रसन्नो यः पुरोधास्तस्य करेण पाणिना प्रकीर्यमाणैः क्षिप्यमाणैः शान्त्यर्थकसलिलस्य वारिणः सीकरनिकरैर्जलकणगणैरभ्युक्षितं सिक्तं शिरो यस्य सः । 'शीकरोऽम्बुकणः स्मृतः' इत्यमरः । महार्हाणि महामूल्यानि वाहनानि हस्त्यश्वादीनि संप्रेष्य सामन्तादिभ्य इति शेषः । बहुलेन प्रचुरेण रत्नानामालोकेन तत्र जटितानां मण्यादीनां प्रभया लिप्ताश्छुरिताः ककुभो दिशो यैस्तानि

लिप्तकुम्भि च भूषणानि भूभुजां संविभज्य क्लिष्टकार्पटिक-कुलपुत्रलोकमोचितैः प्रसाददानैश्च विमुच्य बन्धनानि, नियुज्य तत्कालस्मरणस्फुरणेन कथितात्मानमिव चाष्टादशद्वीप-जेतव्याधिकारे दक्षिणं भुजस्तम्भम् अहमहमिकया सेवकैरिव सुनिमित्तैरपि समग्रैरग्रतो भवद्भिः, प्रमुदितप्रजाजन्यमान-जयशब्दकोलाहलो हिरण्यगर्भ इव ब्रह्माण्डात् कृतयुगकरणाय भवनान् निर्जगाम ।

## राजमुद्रार्पणम्

नातिदूरे च नगरात् उपसरस्वति निर्मिते महति तृणमये, समुत्तम्भिततुङ्गतोरणे, वेदीविनिहितपल्लवललामहेमकलशे,

---

भूषणानि आभरणानि भुभूजां स्वपक्षनृपतीनां संविभज्य वितीर्य । दानेन सर्वलोको वश्यो भवतीति ज्ञात्वा हर्षेण स उपायः कृतः । क्लिष्टेषु पीडितेषु, कार्पटिकेषु पटच्चरधारिषु कुलपुत्रलोकेषु सत्कुलोत्पन्नेष्वपि दरिद्रेषु, मोचितैः प्रदत्तै-रित्यर्थः । प्रसाददानैः पुरस्कारादिवितरणैः । विशेषेषु हर्षावसरेषु बन्धनस्था अपराधिनो मुच्यन्ते इति परंपरा । तत्काले भ्रातृवधस्य यत् स्मरणं तेन सममेव यत् स्फुरणं स्पन्दनं तद्द्वारा कथितो निवेदित आत्मा येन तं स्वं दक्षिणं भुजम् अष्टादश द्वीपा एव जेतव्याः तेषाम् अधिकारे तत्कर्तृपदे सेनापतित्वे इति भावः । गौडाधिप-कृतस्वभ्रातृवधस्मरणकाले एव हर्षस्य दक्षिणो बाहुः पस्पन्दे । तेन स्पन्दनेन निवे-दितात्मानमिव तं भुवनविजयाधिकारे व्यापार्य । दृढत्वदीर्घत्वादिद्योतनाय भुजे स्तम्भत्वारोपः । सेवकैरिव भृत्यैरिव सुनिमित्तैरपि शुभसूचकैर्लक्षणैरपि अहमहमिकया अन्योन्यस्पर्धया अग्रतो भवद्भिः । यथाऽमरः—'अहमहमिका तु सा स्यात् परस्परं यो भवत्यहंकारः' । प्रमुदिताभिः प्रीताभिः प्रजाभिर्जन्यमानः क्रियमाणो जयशब्द-कोलाहलो यस्य सः । कृतयुगस्य सत्ययुगस्य संपादनाय ब्रह्माण्डात् सृष्ट्यादौ जातात् हेममयादण्डात् हिरण्यगर्भो ब्रह्मा इव, पापनाशात् कलावपि सत्ययुगसंपादनायेव हर्षो निजभवनात् निर्जगाम निश्चक्राम । नगरात् स्थाण्वीश्वराख्यात् संप्रति थानेसर इति प्रसिद्धात् । नातिदूरे समीपे इत्यर्थः । सरस्वत्याः समीपे इति उपसरस्वति । अव्ययीभावसमासः । निर्मिते रचिते महति विशाले तृणमये, समुत्तम्भितम् उत्था-पितं तुंगतोरणं यस्मिन् । 'तोरणं स्यात् बहिर्द्वारं पुरद्वारं तु गोपुरम्' इत्यमरः । उत्-स्तम्भित इति स्थिते 'उदः स्थास्तम्भोः पूर्वस्य' इति पाणिनिवचनेन सकारस्य लोपः । वेद्यां निहितः प्रतिष्ठापितः, पल्लवः किसलयं ललामं भूषा यस्य सः, हेम-

बद्धवनमालादाम्नि, धवलध्वजमालिनि, भ्रमच्छुक्लवाससि, पठद्द्वि-
जन्मनि मन्दिरे प्रस्थानमकरोत्। तत्रस्थस्य चास्य ग्रामाक्षपटलिकः
सकलकरणिपरिकरः 'करोतु देवो दिवसग्रहणमद्यैवावन्ध्यशासनः
शासनानाम्'इत्यभिधाय वृषाङ्कामभिनवघटितां हाटकमयीं मुद्रामुप-
निन्ये। जग्राह च तां राजा। समुपस्थापिते च प्रथमत एव मृत्पिण्डे
परिभ्रश्य करकमलादधोमुखी महीतले पपात मुद्रा। मन्दाश्यानपङ्क-
पटले मृदुमृदि सरस्वतीतीरे स्फुटं व्यराजन्त राजयो वर्णानाम्। अम-
ङ्गलाशङ्किनि च विषीदति परिजने नरपतिरकरोत् मनस्येतत्—'अत-
त्त्वदर्शिन्यो हि भवन्ति अविदग्धानां धियः। तथा हि—एकशासन-

---

कलशो यस्मिन्। नवकिसलयालंकृतहेमघटमण्डितवेदिभागे। ललामशब्दः अका-
रान्तः नकारान्तश्च उभयविधः। क्लीबे च। 'ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्य-
केतुषु' इत्यमरः। 'प्रभावे शृंगे च ललामम्' इत्यमरटीका। 'पत्रयुतं पलाशं छदनं
दलं पर्णं छदः पुमान्। उत्सवोऽस्त्री किसलयम्' इत्यमरः। वनमाला दाम। पुष्प-
पत्रप्रतियोजिनी स्रक् वनमाला। अथवा—'आजानु लम्बिनी माला सर्वर्तुकुसुमोज्ज्वला।
मध्यस्थूलदलाढ्या च वनमालेति कीर्तिता।' भ्रमन्तः शुक्लवाससः पुरुषाः यस्मिन्।
द्विजन्मानो ब्राह्मणाः। तत्र विद्यमानस्य चास्य ग्रामाक्षपटलिकः—ग्रामाणां प्रबन्धार्थं
यो विभागस्तस्य कश्चिद् राज्याधिकारी। अक्षाणां आयसुखानां व्यवहाराणां वा पटले
समूहे विवादविषयाणां वा निर्णयार्थं राज्ञा नियुक्तः कर्मचारी धर्माधिकारणिकोऽक्ष-
पटलिकश्च। करणिर्लेख्यम्। कायस्थ इत्यन्ये। अवन्ध्यम् अमोघं शासनम् आदेशो
यस्य सः। देवः स्वामी अद्यैव शासनानां दिवसग्रहणं करोतु। राजशासनेषु राजमुद्रा-
ङ्क्यते शासनाधिकारग्रहणानन्तरम्। अद्य हर्षः सर्वप्रथमं राजाज्ञासु स्वमुद्रान्यासं
करोतु इति तस्याधिकारिणस्तात्पर्यम्। स इत्यभिधाय उक्त्वा वृषस्य वृषभस्य चिह्नं
लक्ष्म यस्यां तां नूतननिर्मितां हाटकमयीं सुवर्णमयीं मुद्राम् उपनिन्ये राज्ञे समर्पया-
मास। मुद्रापरीक्षार्थं प्रथमत एव तत्र विन्यस्ते मृत्पिण्डे च राज्ञः करकमलात्
स्वयमेव परिभ्रश्य निपत्य सा मुद्रा कोमलमृत्तिकायुक्ते सरस्वतीतीरे अधोमुखी पपात
येन ईषच्छुष्कपङ्कपटलशालिनि तस्मिन् तटे मुद्राङ्कितानां वर्णानाम् अक्षराणां राजयः
श्रेणयः स्फुटं व्यराजन्त। राज्ञः करे समर्पितमात्रैव मुद्रा अधः पपात इति महदमङ्गल-
माशङ्कमाने विषीदति च सेवकजने श्रीहर्षः समचिन्तयत् अविदग्धानाम् अकुशलानां
धियः अतत्त्वदर्शिन्यो मिथ्यादर्शिन्यो भवन्ति। यद्यपि मम करात् परिभ्रश्य भूमौ
पतितया मुद्रया—सकला भूमिर्मम एकशासनमुद्राङ्किता स्वयमेव भविष्यतीति सूचितं

मुद्राङ्का भूर्भवतो भविष्यतीति निवेदितमपि निमित्तेन अन्यथा गृह्णन्ति ग्राम्याः' इति अभिनन्द्य मनसा महानिमित्तं तत् सीर-सहस्रसंमितसीम्नां ग्रामाणां शतमदाद् द्विजेभ्यः। निनाय च तत्र तं दिवसम् । प्रतिपन्नायां शर्वर्यां संमानितसर्वराजलोकः सुष्वाप।

## प्रभाते कटकजागरणं प्रस्थानसज्जा च।

अथ गलति तृतीये यामे सुप्तसमस्तसत्त्वनिःशब्दे दिक्कुञ्जर-जृम्भमाणगम्भीरध्वनिरताड्यत प्रयाणपटहः। अग्रतः स्थित्वा च मुहूर्तमिव पुनः प्रयाणक्रोशसंख्यापकाः स्पष्टम् अष्टावदीयन्त प्रहाराः पटहे पटीयांसः।

ततो रटत्पटहे नन्दन्नान्दीके, गुञ्जत्कुञ्जे, कूजत्काहले, शब्दाय-मानशङ्खे, क्रमोपचीयमानकटककलकले, परिजनोत्थापनव्यापृत-

---

तथापि मुद्रापतनमात्रदर्शिनो जनाः अन्यथैव जानन्ति। अतस्तेषां धारणापरिवर्तन-मावश्यकम्, इतरथा हतोत्साहास्ते भवेयुः इति निश्चित्य नरपतिरूपस्थितान्पुरुषान् तथैव प्रत्यबोधयत् । एतच्छुभनिमित्ताभिनन्दनाय च हलसहस्रवाह्यक्षेत्रशालिनां ग्रामाणां शतं विप्रेभ्यः प्रायच्छत्। संमितं परिच्छिन्नमित्यर्थः । तं दिवसं च तत्रैव अत्यवाहयत्। जातायां च रजन्यां संमानितः सत्कृतः सर्वराजलोको येन स सुष्वाप।

अथ रात्र्यास्तृतीये प्रहरे क्षीयमाणे सति। तस्यैव विशेषणम्—सुप्तैः शयितैः समस्तैः सत्त्वैः प्राणिभिः निःशब्दे निभृते तृतीये यामे समाप्तप्राये सति। दिक्कुञ्ज-राणामिव दिग्गजानामिव जृम्भमाणः प्रसरन् गम्भीरध्वनिः प्रचण्डो घोषो यस्य सः प्रयाणसूचकः पटहो ढक्का अताड्यत। क्षणमात्रं विलम्ब्य च तस्मिन्नेव पटहे स्पष्टं सुविशदं यथा स्यात्तथा अष्टौ प्रहाराः कोणाघातकृता अदीयन्त। तैरष्टभिः संकेतैः सूचितं यदस्मिन् दिने क्रोशाष्टकमात्रोऽध्वा गन्तव्य इति। पटीयांसः अतिशयेन पटवः स्पष्टाः इत्यर्थः।

ततः······"रजोध्वस्तजगति प्रयाणसमये इति दूरेणान्वयः । रटन्तः पटहाः आनका यस्मिन् काले इति। 'आनकः पटहोऽस्त्री स्यात्' इत्यमरः। नन्दन्त्यः उत्साहयन्त्यः नान्द्यः ढक्कासदृशवाद्यविशेषाः यस्मिन्, गुञ्जन्तः कुञ्जाः शंखभेदा यस्मिन् । नान्दी मङ्गलपटहः । गुञ्जासंज्ञः शंखभेदः यत्पृष्ठे जतुपरि-कलितं भवति । क्रमेण उपचीयमानः प्रवर्धमानः कटकस्य सैन्यस्य कलकलः

व्यवहारिणि, द्रुतद्रुघणघातघट्यमानकोणिकाकीलकोलाहलकलितककुभि, बलाधिकृतबध्यमानपाटीपतिपेटके, जनज्वलितोल्कासहस्रालोकलुप्यमानत्रियामातमसि, यामचेटीचरणचलनोत्थाप्यमानकामिमिथुने, कटुककटुकनिर्देशनश्यन्निद्रोन्मिषन्निषादिनि, प्रबुद्धहास्तिकशून्यीक्रियमाणशय्यागृहे, सुप्तोत्थिताश्वीयविधूयमानसटे, रटत्कटकमुखरखनित्रखन्यमानक्षोणीपाशे, समुत्कील्यमानकीलशिञ्जानहिञ्जीरे, उपनीयमाननिगडतालकलरवोत्तालतुरङ्गतरङ्ग्यमाणखुरपुटे, लेशिकमुच्यमानमदस्यन्दिदन्तिसंदान-

---

कोलाहलो यस्मिन् । परिजनानां पार्श्ववर्तिनां सेवकादीनाम् उत्थापने व्यापृता व्यवहारिणः कर्मचारिणः यत्र, द्रुतं शीघ्रं द्रुघणानां मुद्गराणां घातैः प्रहारैर्घट्यमानाः उत्पाट्यमाना ये कोणिकानां पटह्कुटीनां कीलाः शङ्कवस्तेषां कोलाहलैः कलिता व्याप्ता ककुभो दिशो यस्मिन्, बलाधिकृतैः सेनाधिकारिभिः बध्यमानः पाटीपतीनां समूहः यस्मिन् । बहुपरिवारपुरुषगृहीतो निवासभूभागः पाटी तस्याः पतिः । भाषायां ग्रामस्य 'पट्टी' विभागः । जनैर्ज्वलितानाम् उल्कासहस्राणाम् उल्मुकसहस्राणाम् आलोकेन प्रकाशेन लुप्यमानं विनाश्यमानं त्रियामायास्तमः अन्धकारो यस्मिन्, यामचेटीनां प्रहरं यावत् जागरणे नियुक्तानां दासीनां चरणचलनेन पादनिक्षेपेण उत्थाप्यमानं प्रबोध्यमानं कामिमिथुनं यस्मिन्, कटुकानां हस्तिपकनियोक्तॄणां कर्मचारिविशेषाणां कटुकेन तीक्ष्णेन निर्देशेन आज्ञया नश्यन्ती पलायमाना या निद्रा तया उन्मिषन्तः प्रबुध्यमाना निषादिनो हस्तिपका यस्मिन् । "आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः । हस्तिनां समूहो हास्तिकम् । 'अचित्तहस्तिधेनोष्ठक्' इति ठक् । प्रबुद्धेन हस्तिसमूहेन शून्यीक्रियमाणं त्यज्यमानं शय्यागृहं शयनशाला यस्मिन् । सुप्तोत्थितेन पूर्वं सुप्तः पश्चादुत्थितः इति विग्रहे 'पूर्वकालैक' इति समासः । अश्वानां समूहोऽश्वीयम् । 'केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।' 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः । सुप्तोत्थितेन अश्वसमूहेन विधूयमानाः सटा यस्मिन्, रटतः कोलाहलं कलयतः कटकस्य सैन्यस्य मुखरैः वाचालैः खनित्रैः खननसाधनविशेषैः कुद्दालैः खन्यमाना उत्पाट्यमाना क्षोणीपाशा भूम्या निबन्धनानि यस्मिन् । समुत्कील्यमानैः समुत्पाट्यमानैः कीलैः शङ्कुभिः शिञ्जानं झणझणायमानं हिञ्जीरम् अश्वगजादिबन्धनसाधनभूता लोहशृङ्खला यस्मिन् । निगडार्थं तालं निगडतालं, निगडो बन्धनशृङ्खला तया संबद्धं तालपत्राकृति लोहमयम् उपकरणं यत् भूमौ निखन्यते । उपनीयमानस्य समाह्रियमाणस्य निगडतालकस्य कलरवेण

**शृङ्खलाखनखननिनादनिर्भरभरितदशदिशि, घासपूलकप्रहारप्रमृष्टपांसुलकरिपृष्ठप्रसार्यमाणप्रस्फोटितचर्मणि, गृहचिन्तकचेटकसंवेष्ट्यमानपटकुटीकाण्डपटमण्डपपरिवस्त्रावितानके, कीलकलापापूर्यमाणचिपिटचर्मपुटे, संभाण्डायमानभाण्डागारिणि, भाण्डागारवहनवाह्यमानबहुनालीवाहिके, निषादिनिश्चलानेकानेकपारोप्यमाणकोशकलसपीडापीडसंकटायमानसामन्तौकसि, दूरगतदक्षदासेरकक्षिप्रप्रक्षिप्यमाणोपकरणसंभारभ्रियमाणदुष्टदन्तिनि, तिर्यगानमज्जाघनिकरकृच्छ्राकृष्टलम्बमानपरतन्त्रतुन्दिलचुन्दीजन-**

---

उत्तालश्चञ्चलो यस्तुरगस्तेन तरङ्गयमाणः, चाल्यमानः खरपुटः शफपुटो यस्मिन्, लेशिकेन घासिकेन मुच्यमाना या मदस्यन्दिनां मदस्राविणां दन्तिनां गजानां संदानश्रृङ्खला वन्धनशृङ्खला तस्याः खनखननिनादेन खनखननिक्वाणेन निर्भरम् अतिमात्रं भरिताः पूरिता दश दिशो यस्मिन्, घासपूलकप्रहारेण प्रमृष्टे प्रोञ्छिते (पूर्वं) पांसुले करिपृष्ठे प्रसार्यमाणं प्रस्फोटितम् विपूरितं (उद्धूलितं वा) चर्म अजिनं यस्मिन्। चेटकाः सेवकाः। उपकार्याकाण्डाः पटमण्डपाः, पटैः कुटी सूक्ष्मगृहम्। काण्डपटकं काण्डैः पटैश्च गृहम्। परिवस्त्रा तिरस्करिणी। वितानको रक्तकः। कीलेति—कीलानां शङ्कूनां कलापेन समूहेन, आपूर्यमाणाश्चिपिटा ह्रस्वाश्चर्मपुटाश्चर्ममयाः प्रसेवकाः ('थैला' इति भाषायाम्) यस्मिन्, संभाण्डायमानो भाण्डानि समाचिन्वन् समाहरन् भाण्डागारी यस्मिन्, 'भाण्डात् समाचयने' इति णिच्। भाण्डागारस्य वहनाय स्थानान्तरप्रापणाय वाह्यमानाः नीयमानाः प्रेर्यमाणाः वा बहवः प्रचुराः बलीवाहिकाः बलीवर्दा यस्मिन्। शंकरस्तु हर्षचरितटीकायां—'नालीवाहिकः करिणां घासग्रहणनियुक्तो हस्तिपको मेण्ठाख्यः।' परमयमर्थो नोपपद्यतेतराम्। भाण्डागारवहनाय हस्तिपकानां क्वोपयोगः? निषादिभिराधोरणैर्निश्चलेषु अनेकपेषु अनेकेषु गजेषु आरोप्यमाणैः स्थाप्यमानैः कोशकलशानां निधिपूर्णघटानां पीडानां धनपेटकानां च राशिभिः शिखरैर्वा संकटायमानं संकीर्णं भवत् सामन्तानाम् ओकः स्थानं यस्मिन्। 'द्विरदोऽनेकपो द्विपः।' 'पिटकः पेटकः पीडा मंजूषाऽथ विहंगिका। 'शिखास्वापीडशेखरौ' इत्यमरः। दूरगतेन दक्षेण धूर्तेन दासेरकेण उष्ट्रेण क्षिप्रं त्वरितं प्रक्षिप्यमाणेन उपकरणसंभारेण भ्रियमाणो दुष्टो दन्ती यस्मिन् काले। दुष्टगजो हि आरोहणायोग्यत्वात् भारवहने नियोज्यते। तिर्यक् तिरश्चीनम् आनमतो न्युब्जीभवतो जाघनिकस्य कामुकस्य करेण पाणिना कृच्छ्रेण यथाकथंचित् आकृष्टोऽपि लम्बमानो विलम्बमानः परतन्त्रः पराधीनस्तुन्दिलो बृहत्कुक्षिर्यश्चुन्दीजनो वेश्याजनस्तेन—तं विलोक्येत्यर्थः

जनितजनहासे, पीड्यमानशारशारिवरत्रागुणग्राहितगात्रविहार-बृंहद्बहुबृहदुन्मदकरिणि, करिघटाघटमानघण्टाटांकारक्रियमाणकर्ण-ज्वरे, पृष्ठप्रतिष्ठाप्यमानकण्ठालककदर्थितकूजत्करभे, अभिजात-राजपुत्रप्रेष्यमाणकुप्रयुक्ताकुलकुलीनकुलपुत्रकलत्रवाहने, गमन-वेलाविप्रलब्धवारणाधोरणान्विष्यमाणनवसेवके, प्रसादवित्तपत्ति-नीयमाननरपतिवल्लभवरवाजिनि, चारुचारभटसैन्यन्यस्यमानना-

---

जनितो जनानां लोकानां हासो यस्मिन्। 'तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचण्डिलः' इत्यमरः। '...अथ चुन्दी कुट्टनी शम्भली समा।' अभि० चि०। कापि पिचण्डिला गणिका स्थूलकायत्वात् चलितुमक्षमा पृष्ठतः पतिता केनापि हास्यप्रियेण जनेन करावलम्बं दत्वा बलादाकृष्य नीयमानाऽपि विलम्बमाना जनानां हास्यकारणं जाता। पीड्यमानेन शीर्णेन शारेण विविधवर्णशालिना शारेः पर्याणस्य बन्धनाय प्रयुक्तेन वरत्रागुणेन कक्षबन्धनचर्मरज्ज्वा। 'चूषा कक्ष्या वरत्रा स्यात्' इत्यमरः। ग्राहितस्य बद्धस्य गात्रस्य देहस्य यो विहारः संचलनं तेन सहैव बृंहन् गर्जन् बहु बृहत् विशाल उन्मदः प्रभिन्नो मदस्रावी करी यस्मिन्। 'शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे। युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च' इति मेदिनी। करिणां हस्तिनां घटासु समूहेषु घटमानानां बद्धानां घण्टानां टाङ्कारेण ध्वनिना क्रियमाणो विधीयमानः कर्णज्वरः श्रवणव्यथा यस्मिन्। 'करिणां घटना घटा' इत्यमरः। पृष्ठे प्रतिष्ठाप्यमानैः आरोप्यमाणैः कण्ठालकैः गोणीभिः कदर्थिताः क्लेशिताः अत एव कूजन्तः करभाः दासेरकाः यस्मिन्। अभिजातैः कुलीनैः अनभ्यस्तवाहनपरिचालनैः राजपुत्रैः राजसूनुभिः प्रेष्यमाणानि काल्यमानानि कुप्रयुक्तानि अविधिवत् चालितानि आकुलानि कुलीनकुलपुत्रकलत्राणां वाहनानि यस्मिन्। केऽपि राजपुत्राः अनभ्यस्तरथादिवाहनव्यापारा अपि मनोविनोदार्थं स्वयमेव सारथ्यं प्रतिपन्नास्तेन च तद्वाहनानि व्याकुलानि जातानीत्यर्थः। गमनवेलायां प्रयाणकाले विप्रलब्धाः संकेतभङ्गात् वञ्चिता ये आधोरणा हस्तिपकास्तैरन्विष्यमाणा मृग्यमाणा नवसेवका यस्मिन्, प्रथमदिवसे आगमनाय कृतसंविदोऽपि केचन सेवकाः आगामिनि प्रभाते न उपस्थितास्तेन प्रतारिता आधोरणा अन्यसेवकान्वेषणे व्यस्ता बभूवुः। प्रसादवित्तैः राजकृपाभाजनत्वेन प्रसिद्धैः पत्तिभिः पादातैः नीयमाना नरपते राज्ञो वल्लभाः प्रियाः वरवाजिनः प्रशस्ताश्वाः यस्मिन्, चारवः कमनीयाः ये चारभटाः सैनिकास्तेषां सैन्येन अनीकेन न्यस्यमानाः स्वशरीरे क्रियमाणाः नासीरमण्डलस्य सेनामुखभागस्य आडम्बराय शोभायै स्थूलाः स्थासकाः यस्मिन्, अथवा चारुश्चारोर्गमनं येषां भटानां योद्धॄणां यानि सैन्यानि तैर्न्य-

सीरमण्डलाडम्बरस्थूलस्थासके, स्थानपालपर्याणलम्बमानलवणकलायीकिङ्किणीनालीसनाथसंकलिततलसारके, कुण्डलीकृतावरक्षिणीजालजटिलवल्लभपालाश्वघटानिवेश्यमानशाखामृगे, परिवर्धकाकृष्यमाणार्धजग्धप्राभातिकयोग्याशनप्रारोहके, व्याक्रोशीजृम्भमाणघासिकघोषे, गमनसंभ्रमभ्रमदुत्तुण्डतरुणतुरङ्गमतन्यमानानेकमन्दुराविमर्दे, सज्जीकृतकरेणुकारोहाह्वानसत्वरसुन्दरीदीयमानमुखालेपने, चलितमातङ्गतुरङ्गप्रधावितप्राकृतप्रातिवेश्यकलोकलु-

---

स्यमाना निधीयमाना नासीरेण कर्पूरेण मण्डलाडम्बराय सैन्यसमूहशोभायै स्थूलाः स्थासकाश्चन्द्रकाः यस्मिन्। 'सेनामुखं तु नासीरम्।' सेनाग्रस्य शोभाजननाय तद्वर्तिभिः सैनिकैः स्वशरीरे कर्पूररेणुना तिलका अक्रियन्तेत्याशयः। 'स्थानपालाः अश्वपालाः अश्वभाण्डागारिका वा' इति शंकरः। तेषां पर्याणेषु पल्ययनेषु लम्बमाना दोलायमाना लवणकलायी दारुमयी मृगाकृतिः सा च अश्वभूषार्थं विधीयते, किङ्किणी क्षुद्रघण्टिका, वैणवी यष्टिः चेति लवणकलायीकिङ्किणी नाल्यस्ताभिः सनाथा सहिता तलसारिका ऊर्णामयी विविधवर्णचित्रा मुखपट्टिका यस्मिन्, कुण्डलीकृतैः मण्डलीकृतैः वलयितैः अवरक्षिणीनां बन्धनरज्जूनां जालैः पाशैः जटिलः संयतः वल्लभपालानाम् अश्वपालानाम् अश्वघटासु तुरगसमूहेषु निवेश्यमानः उपवेश्यमानः शाखामृगो वानरो यस्मिन्। 'वल्लभो दयितेऽध्यक्षे सुलक्षणतुरंगमे' इति मेदिनी। अश्वानां चिकित्सार्थं वानराः सहैव नीयन्ते। परिवर्धकेन अश्वपालेन आकृष्यमाणाः विलम्बभयात् मुहुर्मुहुराकार्यमाणाः अर्धजग्धप्राभातिकयोग्याशनाः प्रारोहकाः यस्मिन्। अर्धमेव जग्धं भुक्तं प्रातराशयोग्यं भोजनं यैस्ते प्रारोहका आरोहिणो यस्मिन्। व्याक्रोशीषु परस्पराह्वानेषु जृम्भमाणः प्रवर्धमानो घासिकानाम् अश्वाद्यर्थं घासाद्याहर्तृणां सेवकानां घोषो यस्मिन्, एकेन दूरात् आकारिते अन्येनापि तारस्वरेण यदुदीर्यते सा हि व्याक्रोशी। गमने प्रस्थाने संभ्रमेण रभसेन भ्रमन्तो विचरन्त उद्गततुण्डा उन्मुखास्तरुणा युवानो ये तुरंगमा हयास्तैः तन्यमानः क्रियमाणोऽनेकमन्दुराणां वाजिशालानां विमर्दो विघट्टनं यस्मिन्। 'वाजिशाला तु मन्दुरा' इत्यमरः। सज्जीकृतासु प्रस्तुतासु करेणुकासु करिणीषु आरोहाय आह्वानेन आकारणेन सत्वराभिः ससंभ्रमाभिः सुन्दरीभिः कामिनीभिः सामन्तादिनारीभिर्दीयमानं विधीयमानं मुखे स्वानने अनुलेपनं यस्मिन्। अथवा हस्तिपकपत्नीभिस्त्वरिताभिः करिणीनां मुखेषु अनुलेपनं दीयते। चलिताः प्रस्थिता ये मातङ्गा इभास्तुरङ्गा वाजिनस्तेषु प्रयातेष्वित्यर्थः। प्रधावितैः सहसा समागतैः प्राकृतप्रातिवेश्यलोकैर्ग्रामीणैः आसन्नवासिजनैर्लुण्ठ्यमाना ह्रियमाणा

ष्ठयमाननिर्घासस्यसंचये, संचरच्चेलचक्राक्रान्तचक्रीवति, चक्रचीत्कारिगन्त्रीगणगृह्यमाणप्रहतवर्त्मनि, अकाण्डदीयमानभाण्डभरितानडुहि, निकटवासलाभलुभ्यल्लम्बमानप्रथमप्रसार्यमाणसारसौरभेये, प्रमुखप्रवर्त्यमानमहासामन्तमहानसे, पुरःप्रधावद्ध्वजवाहिनि, प्रियशतोपलभ्यमानासंकटकुटीरकान्तरालनिःसरणे, करिचरणदलितमठिकोत्थितलोकलोष्टहन्यमानमेण्ठक्रियमाणासन्नसाक्षिणि, संघट्टविघट्टमानव्याघ्रपल्लीपलायमानक्षुद्रकुटुम्बके, कलकलोपद्रवद्रवद्द्रविणबलीवर्दविद्राणवणिजि, पुरःसरदीपिकालोकविरलायमानलोकोत्पीडप्रस्थितान्तःपुरकरिणीकदम्बके, हयारो-

---

निसृष्टस्य पृष्ठतस्त्यक्तस्य घासस्य यवसस्य यवगोधूमादिकस्य च संचयाः राशयो यस्मिन्। संचरता इतस्ततः पर्यटता चेलचक्रेण ग्रामवासिबालकसमूहेन आक्रान्तश्चक्रीवान् रासभो यस्मिन्, अथवा चेलचक्रेण वस्त्रसमूहेन आक्रान्तो भृत इत्यर्थः। चक्रै रथाङ्गैश्चीत्कारिभिः समाकूजद्भिः गन्त्रीगणैः शकटकुलैर्गृह्यमाणम् आदीयमानं प्रहतं क्षुण्णं वर्त्म पन्थाः यस्मिन्, अकाण्डे एव असमय एव दीयमानेन आरोप्यमाणेन भाण्डेन द्रव्यराशिना भरितः पूरितपृष्ठोऽनड्वान् बलीवर्दो यस्मिन्। निकटवर्तिघासस्य लाभे प्राप्तौ यो लोभो गर्धा तेन लुभ्यन् आकृष्यमाणः अत एव लम्बमानः पश्चात् स्थितः इत्यर्थः, प्रथमं पूर्वं प्रसार्यमाणोऽपि वाह्यमानोऽपि सारसौरभेयः बलवान् अनड्वान् यस्मिन्, अथवा सारवान् स्वर्णादिबहुमूल्यसामग्रीवाही वृषभः। यस्मिन् काले—प्रमुखं प्रवर्त्यमानम् आगामिप्रयाणं प्रति प्रेष्यमाणं, महासामन्तानां प्रधाननरपतीनां महानसं रसवत्याद्युपकरणं यस्मिन्, पुरोऽग्रतः प्रधावन्तः प्रसरन्तो ध्वजवाजिनः पताकावन्तो जना यस्मिन्, प्रियवचनशतेन उपलभ्यमानं प्राप्यमाणम् असंकटेषु विस्तृतेषु विशालेषु कुटीरकाणामन्तरालेषु कुटीनां मध्यभागेषु निःसरणं निर्गमनावसरो यस्मिन्। करिणां चरणैः पद्भिः दलिताया मथिताया मठिकायाः कुटीरात् उत्थितेन निर्गतेन लोकेन जनेन लोष्टैर्गुडकैर्हन्यमानस्ताड्यमानो यो मेण्ठो जागरिको गजाधिकारिविशेषो वा, तेन क्रियमाणा आसन्ना निकटवर्तिनः साक्षिणो यस्मिन्, संघट्टे जनसंमर्दे विघट्टमाना विध्वस्ता या व्याघ्रपल्ली क्षुद्रा वनग्रामटिका ततः पलायमानं क्षुद्रम् असमर्थं कुटुम्बकं परिवारो यस्मिन्, कलकलरूपोपद्रवेण द्रवन्ति स्खलन्ति द्रविणानि धनानि यस्मात् तेन बलीवर्देन वृषभेण विद्राणो व्याकुलो वणिक् यस्मिन्। अथवा जनानां कलकल एव उपद्रवस्तेन द्रवन् बिभ्यत् अत एव इतस्ततः पलायमानो यो द्रविणवाही बलीवर्दस्तेन विद्राणो वणिक् यस्मिन्।

**हाहूयमानलम्बितशुनि, सरभसचरणनिपतननिश्चलगमनसुखायमानखक्खटस्तूयमानतुङ्गतुङ्गणगुणे, स्रस्तवेसरविसंवादिसीदद्दाक्षिणात्यसादिनि, रजोजग्धजगति, प्रयाणसमये प्रतिदिशमागच्छद्भिर्गजवधूसमारूढैराधोरणैरूर्ध्वध्रियमाणहेमपत्रभङ्गशारशार्ङ्गैः, अन्तरासनासीनान्तरङ्गगृहीतासिभिः, ताम्बूलिकविधूयमानचामरपल्लवैः, पश्चिमासनिकार्पितभस्त्राभरणभिन्दि-**

---

पुरःसरीणां पुरोवर्तिनीनां दीपिकानाम् आलोकेन प्रकाशेन विरलायमानः स्वल्पीभवन् यो लोकोत्पीडो जनसंमर्दस्तेन तत्र वा (सुख) प्रस्थितम् अन्तःपुरस्य करिणीकदम्बकं करेणुकुलं यस्मिन्। 'समूहनिवहव्यूहसंदोहविसरव्रजाः। स्तोमौघनिकरव्रातवारसंघातसंचयाः। समुदायः समुदयः समवायश्चयो गणः। स्त्रियां तु संहतिर्वृन्दं निकुरुम्बं कदम्बकम्। वृन्दभेदाः समैर्वर्गः, संघसार्थौ तु जन्तुभिः। सजातीयः कुलं, यूथं तिरश्चां पुंनपुंसकम्। पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्। स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम्' इत्यमरः। हयारोहेण अश्ववारेण सादिनेत्यर्थः, हूयमानः आकार्यमाणो लम्बितः पश्चात् स्थितः श्वा सारमेयो यस्मिन्। सरभसं चरणनिपतनेपि त्वरितगमनेऽपि निश्चलगमनेन सुखायमानो यः खक्खटो वृद्धस्तेन स्तूयमानः प्रशस्यमानस्तुङ्गस्य उन्नतस्य परिणाहिनः तुङ्गणस्य अश्वस्य अथवा तन्नामकदेशाश्वस्य गुणो यस्मिन्। द्रुतं द्रवतोप्यश्वस्य पृष्ठप्रदेशस्य स्थिरत्वात् तत्रारूढो वृद्धः सुखमनुभवन् तस्याश्वस्य प्रशंसां करोतीति। खक्खटो वृद्धः। स्रस्तो विलम्बेन प्रसरन् यो वेसरोऽश्वतरस्तेन विसंवादी विरुद्धप्रकृतिकः अपरिचितः इत्यर्थः। दक्षिणदेशे वेसराणामभावात्, सीदन् खिद्यमानः दाक्षिणात्यः सादी यस्मिन्। दक्षिणापथे जातः। 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यक् प्रत्ययः। रजसा धूलिपटलेन जग्धं जगत् यस्मिन्। जग्धं भुक्तम्। इह तु आत्मनि विलीनं कृतमिति भावः।

दिशं दिशं प्रति इति प्रतिदिशम्। सर्वाभ्यो दिग्भ्यः समागच्छद्भिः समापतद्भिः राजभिः राजद्वारमापुपूरे इति दूरेणान्वयः। संज्ञाविशेषणानि—गजवधूसमारूढैः करिणीपृष्ठगतैराधोरणैर्हस्तिपकैः ऊर्ध्वं ध्रियमाणम् उपरि गृह्यमाणम् अवलम्ब्यमानं हेमपत्रभङ्गैः स्वर्णमयपत्ररचनाभिः शारं विविधवर्णचित्रं शार्ङ्गं धनुर्येषां तैः। 'शार्ङ्गं कार्मुकमात्रेपि विष्णोरपि शरासने' इति मेदिनी। अन्तरासनेषु मध्यवर्तिविष्टरेषु आसीनैः उपविष्टैः अन्तरङ्गैर्विश्वस्तपुरुषैर्गृहीताः असयः खड्गा येषां तैः, ताम्बूलिकैः ताम्बूलदायिभिः विधूयमानः चाल्यमानः चामरपल्लवो येषु तैः, पश्चिमासनिकार्या पश्चाद्वर्तिनि विष्टरे अर्पितानि स्थापितानि भस्त्राभरणानि तूणीराः भिन्दिपालानां

पालपूलिकैः, पत्रलताकुटिलकलधौतनलकपल्लवितपर्याणैः, पर्याणपक्षकपरिक्षेपपट्टिकाबन्धनिश्चलपट्टोपधानस्थिरावधानैः, प्रचलपादफलिकास्फालनस्फायमानपदबन्धमणिशिलाशब्दैः, उच्चित्रनेत्रसुकुमारस्वस्थगनस्थगितजङ्घाकाण्डैश्च, कार्दमिकपटकल्माषितपिशङ्गपिङ्गैः, अलिनीलमसृणसतुलासमुत्पादितसितसमायोगपरभागैश्चावदातदेहविराजमानराजावर्तमेचकैः, कञ्चुकैश्चोपचित-

---

सृगाणां हस्तक्षेप्यलगुडभेदानां पूलकानि राशयश्च येषां तैः। 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः'। 'भिन्दिपालसृगौ तुल्यौ' इति चामरः। पत्रलताभिः पत्ररचनाभिः कुटिलानि विविधभङ्गिशालीनि कलधौतस्य स्वर्णस्य नलकैर्हेममयीभिर्यष्टिभिः पल्लवितानि अलंकृतानि पर्याणानि येषां तैः। पर्याणस्य पल्ययनस्य पक्षकयोः पार्श्वभागयोः संयमनाय या परिक्षेपपट्टिका वरत्रा वर्ध्री वा तया बन्धेन निश्चले स्थिरे पट्टोपधाने कौशेयमये उपधाने उपवर्हे (तकिया इति भाषायाम्) स्थिरम् अवधानं येषां तैः। अवधानं देहभारसन्निवेशः ध्यानं वा। यदि आसनं स्थिरं न स्यात् इतस्ततश्च प्रचलेत् तदा ध्यानं शरीरमपि वा न स्थिरायते। पदन्यासार्थम् अश्वपर्याणस्य उभयपार्श्वयोर्लम्बमाना प्रचला गतिवशाच्चलन्ती या पादफलिका पादन्यासिका (रकाब इति भाषायाम्) तस्या आस्फालनेन आघातेन स्फायमानः प्रवर्धमानः पदवन्धस्य पादकटकस्य मणिशिलानां शब्दो येषां तैः। मणिकुट्टिमे पदबन्धेन गतिविशेषेण (दुलकी) चलतां वाजिनां चरणाघातेन यः शब्दो जायते स शब्दः पादफलिकास्फालनध्वनिना द्विगुणीक्रियत इति भावः। नेत्रं वस्त्रभेदः। उद्गतानि चित्राणि यस्मिन् तस्य नेत्रस्य वस्त्रविशेषस्य यत् सुकुमारं कोमलं स्वस्थगनं (सलवार 'सुत्थन' इति भाषायाम्) तेन स्थगिते आवृते जङ्घाकाण्डे जङ्घादण्डौ येषां तैः। चित्रकर्मरमणीयनेत्रवस्त्रनिर्मितकोमलस्वस्थगनधारिभिः इत्यर्थः। कार्दमिकेण पटेन कल्माषिताः पिशङ्गाः कपिलाः पिङ्गा जङ्घा येषां तैः। 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ। चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः। कर्दमेन रक्तं वस्त्रं कार्दमिकम्। ठक् प्रत्ययः। पिङ्गा जङ्घा जङ्घिका। अलिनीलायां भ्रमरवच्छयामलायां मसृणसतुलायां कोमलजङ्घिकायां समुत्पादितः कृतः सितसमायोगेन धवलवर्णमेलनेन परभागो वर्णोत्कर्षो येषां तैः। सतुला हि साम्प्रतिक 'निकर' सदृशी, सा च अन्तरान्तरा श्वेतवस्त्रपट्टिकालंकृता श्यामपटकल्पितास्ति। श्वेतश्यामसमायोगेन च वर्णोत्कर्षः प्रसिद्ध एव। अवदातेषु गौरेषु देहेषु गात्रेषु विराजमानाः शोभमानाः राजावर्तमेचकाः कृष्णपाषाणविशेषवत् कृष्णवर्णाः कञ्चुकाः

**चीनचोलकैश्च, तारमुक्तास्तबकितस्तवरकवारबाणैश्च, नानाकषाय-कर्बुरकूर्पासकैश्च, शुकपिच्छच्छायाच्छादनकैश्च, व्यायामोल्लुप्तपार्श्व-प्रदेशप्रविष्टचारुशस्त्रैश्च, गतिवशवेल्लितहारलतागलल्लोलकुण्डलो-न्मोचनप्रधावितपरिजनैः, चामीकरपत्राङ्कुरकर्णपूरकविघट्टमान-वाचालवालपाशैश्च, उष्णीषपट्टावष्टब्धकर्णोत्पलनालैश्च, कुङ्कुमराग-कोमलोत्तरीयान्तरितोत्तमाङ्गैश्च, चूडामणिखण्डखचितक्षौमचोलैश्च, मायूरपत्रायमाणशेखरषट्पदपटलैश्च, मार्गागतशारिकशारिवाह-**

---

येषां तैः । 'कञ्चुको वारबाणोऽस्त्री' । चोला 'कोट' इति भाषायाम् । अपचितं परिहितं धारितं चीनदेशागतकौशेयकवस्त्रनिर्मितं चोलकं येयैः तैः । उपचित इति पाठस्तु नास्ति समीचीनः । ताराणाम् उज्ज्वलानां मुक्तानां मौक्तिकानां स्तबकैर्गुच्छैर्युक्ताः स्तबरकनामकवस्त्रविशेषनिर्मिताः वारबाणाः कञ्चुकाः येषां तैः । स्तबकितः स्तबकः संजातोऽस्येति 'तदस्य संजातम्' इत्यादिना इतच् । 'स्याद् गुच्छकस्तु स्तबकः' इत्यमरः । येषां कञ्चुकेषु मुक्तागुच्छैः शोभा संपादिता इत्यर्थः । नानाप्रकारकाः कषायाः रक्तपीतवर्णाः कर्बुराश्चित्राश्च कूर्पासकाश्चोलका येषां तैः । शुकपिच्छच्छायानि हरितवर्णानि आच्छादनकानि उत्तरीयाणि येषां तैः । व्यायामेन उल्लुप्तयोः सुविभक्तयोः क्षीणयोः पार्श्वप्रदेशयोः प्रविष्टानि निवेशितानि चारूणि मनोहराणि शस्त्राणि यैस्तैः । कटिप्रदेशे निबद्धशस्त्रबन्धे 'पेटी' इति भाषायां मुच्यमाने तैर्यथास्थानं खड्गादिकं नियोजितम् । गतिवशेन संचलनेन वेल्लितायाम् आन्दोलितायां ग्रीवास्थितहारलतायां लग्नस्य समासक्तस्य लोलस्य चञ्चलस्य कुण्डलस्य कर्णाभरणस्य उन्मोचनाय विश्लेषणाय प्रधावितः परिजनो येषां तैः । उष्णीषपट्टेषु शिरोवेष्टनेषु अवष्टब्धम् आरोपितं कर्णोत्पलस्य नालं वृन्तं यैस्तैः । चामीकरस्य कनकस्य पत्राङ्कुरैः पत्ररचनाभियुक्तं यत् कर्णपूरकं कर्णाभरणं तत्र विघट्टमानः अत एव वाचालो मुखरः बालपाशः अन्यः कर्णावतंसो येषां तैः । कुङ्कुमस्य रञ्जनेन काश्मीरजस्य रागेण वर्णेन कोमलं मनोज्ञं यत् उत्तरीयम् उत्तरासङ्गस्तेन अन्तरितम् आच्छन्नं वेष्टितं वा उत्तमाङ्गं मूर्धा यैषां तैः । चूडामणिखण्डेन चूडामणिशकलेन करनिकरेण खचितः समाकलितः क्षौमचोलो येषां तैः । चोलस्य स्थाने खोलस्य पाठः समुचितः । 'खोलकः पाकवल्मीकपूगकोशशिरस्त्रके' इति विश्वः । येषां शिरस्त्रकं मणिश्रेष्ठेन गुम्फितं निर्मितं वाभवत् । मयूरस्येदं मायूरं 'तस्येदम्' इत्यण् । मायूरं पत्रं पिच्छं तद्वत् आचरतः शेखरस्य पुष्पमयशिरो-भूषणस्योपरि भ्रमत् षट्पदपटलं भ्रमरकुलं येषां तैः । मार्गम् अध्वानम् आगताः

वेगदण्डैः, पुरश्चञ्चच्चामरकिर्मीरकार्दरङ्गचर्ममण्डलमण्डनोड्डीयमानचटुलडामरचारभटभरितभुवनान्तरैः, आस्कन्दत्काम्बोजवाजिशतशिञ्जानजातरूपायानरवमुखरितदिङ्मुखैश्च, निर्दयप्रहतलम्बापटहशतपटुरवबधिरीकृतश्रवणविवरैः, उद्घोष्यमाणनामभिः, उन्मुखपादातप्रतिपाल्यमानाज्ञापातै राजभिरापुपूरे राजद्वारम्।

## श्रीहर्षवर्णनम्।

उदिते च भगवति दिनकृति राज्ञः समायोगग्रहणसमयशंसी सस्वान संज्ञाशङ्खो मुहुर्मुहुः। अथ नचिरादिव प्रथमप्रयाण एव दिग्विजयाय दिग्गजसमागममिव गमनविलोलकर्णतालदोलाविला-

---

प्राप्ताः शारिकशारिवाहा विविधवर्णचित्रपर्याणवन्तो वेगदण्डास्तरुणा गजा येषाम्। शारा एव शारिका या शारिस्तां वहन्तीति विग्रहः। पुरः पुरतः चञ्चद्भिश्चलद्भिश्चामरैर्वालिव्यजनैः किर्मीराणि शबलानि कार्दरङ्गदेशोद्भवानि चर्ममण्डलानि खेटकानि ( 'ढाल' इति भाषायाम् ) मण्डनानि तैः उड्डीयमानैः उड्डीय गच्छद्भिरिव द्रुतगमनैश्चटुलैः चंचलैः डामरैः उत्कटैश्चारभटैः शूरैः भरितं पूरितं भुवनान्तरं यैः। आस्कन्दतां चलतां काम्बोजदेशोत्पन्नवाजिनां हयानां शतस्य शिञ्जानानां झणझणायमानानां जातरूपस्य काञ्चनस्य आयानानाम् अश्वभूषणानां रवैः स्वनैः मुखरितानि दिशां मुखानि यैः। निर्दयं बलात् प्रहतानां ताडितानां लम्बापटहानां मुरजानां शतस्य पटुभिस्तीव्रै रवैः बधिरीकृतानि श्रवणशक्तिशून्यानीव कृतानि श्रवणानां कर्णानां विवराणि कुहराणि यैः। उद्घोष्यमाणम् उच्चैःस्वरेण निवेद्यमानं नाम येषां तैः, उन्मुखैः ललाटं पश्यद्भिः पादातैः पत्तिभिः प्रतिपाल्यमान आज्ञापातो येषां तैः, राजभिः सामन्तैः राज्ञो हर्षस्य द्वारम् आपुपूरे पूर्णमभूत्।

उदिते च भगवति दिनकृति सूर्ये राज्ञः नरपतेः समायोगग्रहणस्य समयं कालं शंसतीति सः संज्ञाशङ्खः संकेतशङ्खः मुहुर्मुहुर्भूयोभूयः सस्वान दध्वान। समायोगो हि यात्रासमारोहः संनाहः तत्कालोचितवस्त्रादिपरिधारणं समवायो वा। इह संनाह एव ग्राह्यः। राजा समायोगं यात्रायोग्यं वेषं धारयतीति सूचकः शङ्खः सस्वान। अथ नचिरादिव तत्कालमेव गमनेन चलनेन विलोलयोः तरलयोः अग्रतः पृष्ठतश्च भवतोः कर्णतालयोः कर्णौ ताले इव तालपत्रे इव विशालत्वात् कर्णताले तयोर्दोलाविलासैः दोलाया इव विलासैर्मुहुर्मुहुः संचलनैः दिग्गजानां दिगन्तदन्तावलानां समागमं समवायम् इव कुर्वाणया। करेणुका कर्णतालमान्दोलयन्ती दिग्गजान् आकारयन्तीव समदृश्यत।

सैः कुर्वाणया करेणुकयोह्यमानः, वैदूर्यदण्डविकटेनोपरि प्रत्युप्त-पद्मरागखण्डखचिततया सूर्योदयदर्शनकोपादिव लोहितायता ध्रियमाणेन मङ्गलातपत्रेण, कदलीगर्भाभ्यधिकम्रदिम्ना नवनेत्रनिर्मितेन द्वितीय इव भोगिनामधिपतिः अङ्गलग्नेन कञ्चुकेन, अमृतमथनदिवस इव क्षीरोदफेनपटलधवलाम्बरवाही, बाल एव पारिजातपादप इवाखण्डलभूमिमारूढः, विधूयमानचामरमरुद्विधूतकर्णपूरकुसुममञ्जरीरजसा सकलभुवनवशीकरणचूर्णेनेव दिशश्छुरयन्, अभिमुखचूडामणिघटमानपाटलप्रतिबिम्बमुदयमानं सवितारमपि

---

करिण्या उह्यमानः करिणीं समारुह्य निर्जगाम नरपतिरिति । करेणुकायाः कर्णौ क्रमात् अग्रतः पृष्ठतश्च भ्रमन्तौ दिग्गजान् तत्रागन्तुम् आकारयतः इव । वैदूर्याख्यरत्नेन खचितो यो दण्डस्तेन विकटम् उज्ज्वलं तेन । उपरि ऊर्ध्वभागे प्रत्युप्तेन गुम्फितेन पद्मरागखण्डेन पद्मरागशकलेन खचिततया उपचिततया सूर्योदयदर्शनकोपादिव लोहितायता रक्तवर्णीभवता ध्रियमाणेन राज्ञः उपरि धार्यमाणेन मङ्गलच्छत्रेण उपलक्षितः । अत्र 'लोहितादिडाज्भ्यः क्यष्' इति क्यषि लोहितायति । शतरि तृतीयाविभक्तौ लोहितायता। कदलीगर्भपत्रादपि अभ्यधिकः सातिशयः म्रदिमा कोमलिमा यस्य तेन । मृदुशब्दात् इमनिच्प्रत्यये रूपम् । 'पृथ्वादिभ्य इमनिज्वा ।' नवेन नूतनेन नेत्राख्यवस्त्रनिर्मितेन अङ्गलग्नेन परिहितेन कञ्चुकेन, भाषायाम् अँगरखाख्येन चोलकेन, अपरो भोगिनामधिपतिरिव शेष इव दृश्यमानः । 'स्याज्जटांशुकयोर्नेत्रम्' इत्यमरः । कञ्चुकः निर्मोको वारवाणश्चोलो वा । सर्पः सनिर्मोकः नृपस्तु सचोलः । सर्पः स्पर्शेन स्वतो मृदुर्भवति नृपस्य तु चोलः कौशेयमयतया मसृणः । भोगः सर्पशरीरमिति भोगिनामधिपतिः शेषः, नृपोप्यैश्वर्यादिभोगवतां राज्ञामधिपश्चक्रवर्ती। अमृतमथनदिवस इव नृपः क्षीरोदस्य क्षीरसागरस्य फेनपटलवद् धवलं सितवर्णम् अम्बरं पटं वहतीति सः। दिवसस्तु क्षीरोदस्य फेनपटलेन धवलम् अम्बरम् अन्तरिक्षं वहतीति । अमृतमथनकाले हि क्षीरोदस्य उद्गच्छता धवलफेनचयेन गगनं धवलं बभूव । पारिजातपादपः नूतनोपि आखण्डलस्य इन्द्रस्य भूमौ प्रदेशे स्वर्गे भवति । हर्षस्तु आखण्डलभूमिम् ऐश्वर्यातिशयहेतोः इन्द्रपदसदृशं राजपदं बाल एव अधिरूढः । चक्रवर्तितया निर्विभागाम् अखण्डाम् अखिलां भूमिमारूढः । सकलस्य कृत्स्नस्य भुवनस्य वशीकरणाय चूर्णविशेषेणेव विधूयमानानाम् आन्दोल्यमानानां चामराणां बालव्यजनानां मरुता पवनेन विधूतानां विकम्पितानां कर्णपूरीकृतकुसुममञ्जरीणां रजसा परागेण दिशः ककुभश्छुरयन् लिम्पन् । स्वतेजसा च, अभिमुखे

पिबन्निव तेजसा, बहलताम्बूलसिन्दूरच्छुरितया विलभमान इव द्वीपान्तराण्योष्ठमुद्रयानुरागस्य स्फुरन्महाहारमरीचिचक्रवालानि चामराणीव दिशोऽपि ग्राहयन्, राजकेक्षणोत्क्षिप्तत्रिभागया त्रीनपि लोकान्करदानायाज्ञापयन्निव सविभ्रमं भ्रूलतया, द्राघीयसा बाहुप्राकारेण परिक्षिपन्निव रिरक्षिषया सप्तापि सागरमहाखातानखिलमिव क्षीरोदमाधुर्यमादायोद्गतया लक्ष्म्या समुपगूढः, गाढममृतमय इव पीयमानः कुतूहलोत्तानकटकलोकलोचनसहस्रैः, स्नेहार्द्रेषु राज्ञां

---

चूडामणौ चूडारत्ने घटमानं प्रतिफलितं पाटलं रक्तवर्णं प्रतिबिम्बं मण्डलं यस्य तम्, उदयमानम् उद्यन्तं सवितारं सूर्यमपि पिबन्निव। चूडामणिप्रतिबिम्बितं सूर्यमण्डलं नृपतेजसा निपीतम् इव प्रतीयते। बहलेन सान्द्रेण ताम्बूलेनैव सिन्दूरेणैव छुरितया व्याप्तया ओष्ठमुद्रया अधरमुद्रया द्वीपान्तराणि अन्यद्वीपान् अनुरागस्य प्रेम्णः हस्ते इत्यर्थः, अन्यदपि किञ्चित् सिन्दूरच्छुरितया राजमुद्रया अङ्कयित्वा कस्मैचिद् दीयते। अत्र हर्षेण सिन्दूरतुल्यताम्बूलरागच्छुरिताधरमुद्रया अङ्कितानि द्वीपान्तराणि अनुरागाय दत्तानीति भावः। अन्यद्वीपवासिनोऽपि हर्षे अनुरक्ता जाताः। स्मयमानस्य यस्य स्मितमरीचयोऽखिलानपि द्वीपाननुरक्तान् चक्रुरिति भावः। न तेन ते जिता अपितु तेऽनुरक्ताः सन्तः स्वयमेव तस्य वश्या अभूवन्। प्रातः बालारुणरागेण रक्तान् द्वीपान् द्रष्टुरुत्प्रेक्षेयम्। स्फुरतां महाहाराणां विशालमौक्तिकसराणां मरीचिचक्रवालानि रश्मिमण्डलानि एव चामराणि तानि दिशोऽपि ग्राहयन्। दिशोपि दास्यः इव तेन हारलतारश्मिकलापव्याजेन चामराणि ग्राहिताः। दिक्षु न मौक्तिकरश्मिमाला अपि तु ताभिः सहर्षं परिचर्यार्थं चामराणि करयोराकलितानीति तात्पर्यम्। राज्ञां समूहो राजकम्, तस्य ईक्षणे अवलोकने सविभ्रमम् उत्क्षिप्तः उत्थितः त्रिभागः तृतीयभागो यस्याः तया। 'अथ राजकम्। राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्' इत्यमरः। भ्रूलतया करदानाय राजभागप्रदानाय त्रीन् अपि लोकान् आज्ञापयन् इव आदिशन्निव। समारम्भेण निरीक्षमाणस्य यस्य लोचनत्रिभागेन कटाक्षव्याक्षेपेण त्रिलोकी राजदेयभाग-(टैक्स)-मुपहर्तुं प्रेरितेवेत्युत्प्रेक्षा। द्राघीयसा अतिदीर्घेण बाहुना एव प्राकारेण सालेन रिरक्षिषया रक्षितुमिच्छया परिपिपालयिषया सागरा एव महाखातानीव परिखा इव येषां तान् सागरमहाखातान् सप्तापि लोकान् इत्यर्थः। प्राकारेण इव विशालेन बाहुना परिक्षिपन्निव परिवेष्टयन्निव अखिलं सकलं क्षीरोदस्य क्षीरसागरस्य माधुर्यमादाय गृहीत्वा उद्गतया निष्क्रान्तया लक्ष्म्या कमलया समुद्रदुहित्रा गाढमुपगूढो भृशमालिङ्गितः। श्रीहर्षे लक्ष्मीर्माधुर्यं च सह निवसतः इति भावः।

हृदयेषु गुणगौरवेण मज्जन्निव, लिम्पन्निव सौभाग्यद्रवेण द्रष्टॄणाममरपतिरिवाग्रजवधकलङ्कप्रक्षालनाकुलः, पृथुरिव पृथिवीपरिशोधनावधानसंकलितसकलमहीभृत्समुत्सारणः,पुरःसरैरालोककारकैः सहस्रसंख्यैरर्क इव किरणैरधिकारचातुर्यचञ्चलचरणैः, व्यवस्थास्थापननिष्ठुरैः, भयपलायमानलोकोत्पीडान्तरिता दशापि दिशो ग्राहयद्भिरिव, चलितकदलिकासंपातपीतप्रचारं पवनमपि विनये

---

कुतूहलेन उत्तानैः कौतुकेन उत्थितैः कटकलोकलोचनानां सैनिकजननयनानां सहस्रैः पीयमानः इव एकतानया दृष्ट्या निभाल्यमानः सादरावलोकेन पानोत्प्रेक्षा । अमृतमयत्वात्पीयूषमयत्वात् पीयमानः अमृतं हि पीयते तथाविधेनाभिनिवेशेनेति । गुणगौरवेण हेतुना राजा भूभृतां स्नेहार्द्रेषु प्रेमार्द्रेषु हृदयेषु मानसेषु मज्जन्निव अवगाहमान इव, अन्यदपि गौरवेण गुरुत्वादेव जलादौ निमज्जति । स्नानान्तरं हि चन्दनादिलेपो विधीयते । द्रष्टॄणां दर्शकानां सौभाग्यं शोभनमदृष्टम् एव द्रवः चन्दनादिरसस्तेन आत्मानं लिम्पन्निव दिहन्निव । स्नानस्य अनुलेपनस्य च आवश्यकतैव कुत इति जिज्ञासायामाह—अमरपतिरिव इन्द्र इव अग्रजस्य स्वज्येष्ठभ्रातुः राज्यवर्धनस्य वधेन गौडाधिपविहितेन व्यापादनेन यः कलंकोऽपवादस्तस्य प्रक्षालनाय आकुलः । इन्द्रोपि अग्रजस्य ज्येष्ठभ्रातुः ब्राह्मणस्य वा वृत्रस्य वधेन यः कलङ्कः पापं तस्य प्रक्षालने समाकुलः । यथा रामायणे 'तमिन्द्रं ब्रह्महत्या तु गच्छन्तमनुगच्छति ।' पृथुरिव वेनात्मजो नृपविशेष इव पृथिव्याः वसुधायाः परिशोधनं निष्कण्टकीकरणं तत्र यदवधानं मनोनिवेशनं तेन संकलिता कृता सकलानां महीभृतां राज्ञां समुत्सारणा येन सः । पृथुपक्षे तु पृथिव्याः परिशोधनाय कृष्याद्यर्थं संस्करणाय संकलिता सर्वेषां पर्वतानां समुत्सारणा अपनयनं येन सः । पृथुः पृथिव्यां सर्वत्र व्याप्तान् पर्वतान् पुरा धनुष्कोट्या अपसार्य उत्तरस्यां हिमालयमालाम् अधस्ताच्च विन्ध्यश्रेणीम् अकार्षीत् । तेन मध्ये प्रगुणो भूभागः संजातस्तत एव इयं पृथ्वीति कथ्यते । पुरःसरैः अग्रगामिभिः, आलोककारकैः जयघोषकारिभिः, अधिकारे नियोगे चातुर्येण कौशलेन चञ्चलास्तरलाश्चरणा येषां तैः, व्यवस्थायाः नियन्त्रणस्य स्थापने रक्षणे निष्ठुरैः कठोरैरशिथिलैः, सहस्रसंख्यैः किरणैः रश्मिभिः अर्क इव सूर्य इव । किरणा अपि आलोकं प्रकाशं कुर्वन्ति इति आलोककारकाः तैः । भयेन त्रासेन पलायमानानां विद्रवतां लोकानां जनानाम् उत्पीडैः समूहैः अन्तरिताः आवृताः व्यवहिता दिशोपि ग्राहयद्भिरिव ककुभोपि हर्षस्य वशे आनयद्भिरिव । चलितानां कम्पितानां कदलिकानां पताकानां संपातेन संचारेण पीतः प्रचारो यस्य, निरुद्धं गमनं यस्य तं पवनमपि वशे

स्थापयद्भिरिव, द्रुतचरणोद्धूतधूलिपटलावधूतान्दिनकरकिरणानप्युत्सारयद्भिरिव, कनकवेत्रलतालोकविक्षिप्यमाणं दिनमपि दूरीकुर्वद्भिरिव दण्डिभिरितस्ततः समुत्सार्यमाणजनसमूहो निर्जगाम नरपतिः।

## राजमण्डलविभाजनम्।

अवनमति च विनयनमितवपुषि, भयचकितमनसि, चलनशिथिलमणिकनकमुकुटकिरणनिकररुचिरशिरसि, विलुलितकुसुमशेखररजसि राजचक्रे, प्रभामुचां चूडामणीनामवाञ्चस्तिर्यञ्च उदञ्चश्च चञ्चन्तो मरीचयश्चाषराशय इव सुशकुनसंपादनाय चेलुः। मेघायमानरेणुमेदुरं मन्दिरशिखण्डिन इव खमुड्डीयमानाः कोमलकल्पपादपपल्लवचन्दनमालाकलापा इवावध्यन्त दिग्द्वारेषु दिक्पालैः

---

स्थापयद्भिरिव 'रम्भावृत्तेऽथ कदलीपताकामृगभेदयोः' इति मेदिनी। द्रुतैः सत्वरैश्चरणैः पद्भिः उद्धूतेन उत्क्षिप्तेन धूलिपटलेन रजोराशिना अवधूतान् अपसारितान् दिनकरस्य रवेः किरणान् अपि उत्सारयद्भिरिव। कनकवेत्रलतानां काञ्चनदण्डिकानाम् आलोकेन प्रकाशेन विक्षिप्यमाणं दिनमपि दूरीकुर्वद्भिरिव। सुवर्णदण्डिकासु निपत्य रविरश्मयः पुनरुत्थाय दिशः प्रतिगच्छन्ति तत्र कविरुत्प्रेक्षते यत् दण्डिनो न केवलं जनानामेव प्रत्युत दिनस्यापि उत्सारणं चक्रुः। तादृशैः दण्डिभिः समुत्सार्यमाणो जनसमूहो लोकसंमर्दो यस्मात् स नरपतिः श्रीहर्षः स्वावासात् निर्जगाम निश्चक्राम।

अवनमतीति—विनयेन प्रश्रयेण नमितं प्रह्वं वपुर्यस्य तस्मिन्, भयेन चकितम् अभिभूतं मनो हृदयं यस्य तस्मिन्, चलनेन गमनेन शिथिलानां स्वस्थानात्स्खलितानां कनकमुकुटानां स्वर्णकिरीटानां किरणनिकरैः रश्मिसमूहैः रुचिरं मनोज्ञं शिरो मूर्द्धा यस्य तस्मिन्, विलुलितम् इतस्ततो विकीर्णं कुसुममयशेखराणां रजो यस्य तस्मिन्, राजचक्रे राजमण्डले अवनमति सति समागत्य श्रीहर्षं नमस्कुर्वति सति। राज्ञां प्रभामुचां कान्तिमतां चूडामणीनां शिरोरत्नानाम् अवाञ्चः अधःप्रसारिणः तिर्यञ्चः तिर्यक्प्रसारिणः उदञ्चः ऊर्ध्वगामिनः चञ्चन्तः स्फुरन्तः मरीचयो गभस्तयः सुशकुनसंपादनाय राज्ञो विजययात्रायै शोभननिमित्तजननाय शुभसूचनाय चाषराशयः नीलहरितपतत्रवत्पक्षिविशेषसमूहा इव चेलुः। यात्रारम्भे चाषदर्शनं माङ्गलिकं मन्यन्ते। उक्तं च 'संदर्शनं शुभदमस्य सदैव यातुः'। 'चाषः किकीदिवि' इत्यमरः। मेघवदाचरद्भी रेणुभिर्मेदुरं स्निग्धं सान्द्रं वा खं गगनं प्रति उड्डीयमाना मन्दिरशिखण्डिनः इव भवनमयूरा इव ते चलन्तो मरीचयो मङ्गलार्थं दिक्पालैः दिशामधीशैरिन्द्रादिभिः

प्रणम्यमानश्च नेत्रत्रिभागैश्च कटाक्षैश्च समग्रेक्षितैर्भ्रूवञ्चितैश्चार्धस्मितैश्च परिहासैश्च छेकालापैश्च कुशलप्रश्नैश्च प्रतिप्रणामैश्चोन्मत्तभ्रूवीक्षितैश्चाज्ञादानैश्चाक्रीडन्निव मानयन् प्रणामान् प्रणयदानैः प्रवीराणां वीरो यथानुरूपं विबभाज राजकम् ।

## कटकप्रस्थानविलोकनम् ।

अथ प्रस्थिते राजनि कलकलत्रस्तदिङ्नागशूत्काररव इवेतस्ततस्तस्तार तारतरस्तूर्याणां प्रतिध्वनिराशातटेषु । दिग्गजेभ्यः प्रकुपितानां त्रिप्रस्रुतानां करिणां मदप्रस्रवणवीथीभिरलिकुलकालीभिः

---

दिग्द्वारेषु दिक्षु एव द्वारेषु कल्पपादपपल्लवानां सुरतरुकिसलयानां चन्दनमालानां मलयजस्रजां च कलापा इव समूहा इव अबध्यन्त । 'वन्दनमाला' इति पाठे तु—कल्पपादपपल्लवानां वन्दनमालाकलापाः जनैः प्रणम्यमानश्च नमस्क्रियमाणश्च क्वचित् नेत्रत्रिभागैः नयनयोस्तृतीयभागैः पश्यन्, क्वचित् कटाक्षैः अपाङ्गेक्षितैः, अन्यत्र समग्रदृशावलोकितैः, अपरत्र भ्रूवञ्चितैः भ्रूचलितैः, क्वचित् अर्धस्मितैर्मन्दस्मितैः, परिहासैश्छेकालापैः वक्रोक्तिभिः, कुशलप्रश्नैः, प्रतिप्रणामैः, उन्मत्तभ्रूवीक्षितैश्च आज्ञादानैश्च मर्यादानुरूपं प्रतिव्यक्ति भिद्यमानैः एतैरन्यैश्च व्यवहारैः प्रवीराणां शूराणां प्रणामान् प्रमाणयन् संभावयन्, समुपस्थितैः सामन्तैः संपादितानामभिवादनानां प्रत्यभिवादनरूपेण विविधैः पूर्वोक्तप्रकारैः प्रीतिपरिचयं विदधानः केलिमिवाकलयन्न लक्ष्यत, प्रीतिपरिचयप्रकारेणैव च यथायोग्यं विभागमिव राज्ञामकार्षीत् । प्रणयदानैः प्रेमप्रदानैराक्रीणन्निव (?) प्रणयं दत्त्वा विनिमये तेषां प्रणामान् प्रतिगृह्णन्निव तत् राजकं राजमण्डलं यथानुरूपं यथोचितं विबभाज । अत्र परिवृत्तिरलंकारः 'परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत्' इति ।

अथ राजनि प्रस्थिते सति तूर्याणां वाद्यानां तारतरस्तीव्रतरः प्रतिध्वनिः प्रतिनिनादः आशानां दिशां तटेषु । "दिशस्तु ककुभः काष्ठाः आशाश्च हरितश्च ताः" इत्यमरः । सैन्यस्य कलकलनिनादात् कोलाहलात् त्रस्तानां भीतानां दिगन्तदन्तावलानां शूत्काररव इव चीत्कारध्वनिरिव इतस्ततः सर्वदिक्षु तस्तार । दिग्गजेभ्यः प्रकुपितानां दिशां करिभ्यः क्रुद्धानाम् । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी । त्रिःप्रस्रुतानां त्रिभ्यः स्थानेभ्यो मदमुचां करिणाम् इभानाम् अलिकुलकालीभिः रोलम्बकदम्बमलिनाभिः मदप्रस्रवणवीथीभिः मदधारापरंपराभिः कालिन्द्याः यमुनायाः वेणिकासहस्राणीव धाराशतानीव सस्यन्दिरे प्रसुस्रुविरे । 'कालिन्दी सूर्यतनया यमुना शमनस्वसा' इत्यमरः । कालिदासेन तु गजानां सप्तधा मदस्रवणं

कालिन्दीवेणिकासहस्राणीव सस्यन्दिरे। सिन्दूररेणुराशिभिररुणायमानबिम्बे रवावस्तमयसमयं शशङ्किरे शकुनयः। करिणां षट्पदकोलाहलमांसलैः कर्णतालनिस्वनैस्तिरोदधिरे दुन्दुभिध्वनयः। दोधूयमानश्च सचराचरमाचचाम चामरसंघातो विश्वम्। अश्वीयश्वासनिक्षिप्तैः शिश्विन्दे सिन्धुवारदामशुचिभिर्निरन्तरमन्तरिक्षं फेनपिण्डैः। पिण्डीभूततगरस्तवकपाण्डुराणि पपुरिव परस्परसंघट्टनष्टाष्टदिशं दिवसमुच्चचामीकरदण्डान्यातपत्रवनानि। रजोरजनीनिमीलितो मुकुटमणिशिलावलीबालातपेन विचकास वासरः। राजतैर्हिरण्मयैश्च मण्डनकभाण्डमण्डलैर्ह्रादमानैर्हरितीकृताः परिह्रादा हरितो बधिरतां दधुः। अरिप्रतापानलनिर्मूलनायेव मदो-

---

वर्णितं यथा—'प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः। असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः' ॥रघु०॥ करिणां करटतटेभ्यः परिभ्रश्य इतस्तत उड्डीयमानैः सिन्दूररेणुराशिभिः अरुणायमानं लोहितायमानं बिम्बं मण्डलं यस्य तस्मिन्, रवौ भानौ रक्तवर्णे भवति सति शकुनयः पतत्रिणः चक्रवाकाः अस्तमयसमयं प्रदोषवेलां शशङ्किरे बुबुधिरे। षट्पदकोलाहलैः भ्रमरझाङ्कारैः मांसलैः प्रवृद्धैः करिणां गजानां कर्णतालनिस्वनैः कर्णतालध्वनिभिः दुन्दुभिघोषाः तिरोदधिरे अभ्यभूयन्त। अतिशयेन धूयमानो वीज्यमानश्चामरसंघातो बालव्यजननिवहः सचराचरं कृत्स्नमित्यर्थः। विश्वं ब्रह्माण्डम् आचचाम आच्छादयामासेत्यर्थः। अश्वानां समूहः अश्वीयं तस्य श्वासेन निक्षिप्तैः निष्ठ्यूतैः सिन्धुवारदामशुचिभिः निर्गुण्डीकुसुमस्तवकशुभ्रैः फेनपिण्डैः फेनस्तबकैर्निरन्तरं व्याप्तम् अन्तरिक्षं नभः शिश्विन्दे श्वैत्यमभजत। 'ञिश्विदा श्वेतने' इति धातोर्लिटि रूपम्। पिण्डीभूतस्य पुञ्जीभूतस्य तगरस्य तदाख्यस्य पुष्पविशेषस्य स्तबकवत् गुच्छवत् पाण्डुराणि धवलानि उच्चा उद्गताः चामीकरदण्डा येषां तानि। आतपत्राणां छत्राणां वनानि संघाताः परस्परम् अन्योन्यं संघट्टेन संमर्देन नष्टाः विलुप्ता अष्टौ दिशो यस्य तं दिवसं पपुरिव आत्मनि न्यमीलयन्निव। रज एव धूलीपटलमेव रजनीतिमिरं निशातमस्तेन निमीलितः पिहितः वासरो दिवसः। मुकुटेषु किरीटेषु मणिशिलावलीनां रत्नरश्मीनां बालातपेन नवातपनिभेन रश्मिराशिना पुनः विचकास बभासे। अत्र पूर्वरूपालंकारः।

सर्वतो राजमानैः सस्यादिभिः हरितीकृताः श्यामायमानाः परिह्लादाः परितो ह्लादयुक्ताः। शब्दार्थस्य ह्लादतेः घञि रूपम्। हरितो दिशः ह्लादमानैः शब्दायमानैः

ष्मशीकरैः शिशेकिरे करिणः ककुभां चक्रम्। चक्षुषामुन्मेषं मुमुषुस्तडिच्चञ्चलानि चूडामणीनामर्चींषि। स्वयमपि विसिस्मिये बलानां भूपालः सर्वतो विक्षिप्तचक्षुश्चाद्राक्षीदावासस्थानसकाशात्प्रतिष्ठमानं स्कन्धावारम्, अधोक्षजकुक्षेरिव युगादौ निष्पतन्तं जीवलोकम्, अम्भोनिधिमिव कुम्भभुवो वदनात्प्लावितभुवनमुद्भवन्तम्, अर्जुनबाहुदण्डसहस्रसंपिण्डितोन्मुक्तमिव सहस्रधा प्रवर्तमानं प्रवाहं नर्मदायाः। 'प्रसर तात। भाव, किं विलम्बसे। त्वङ्गति तुरंगमः।

---

राजतैः रौप्यैः हिरण्मयैः काञ्चनैः मण्डनकैः शोभाकारकैः भाण्डमण्डलैः अश्वालंकारसमूहैः। 'स्याद्भाण्डमश्वाभरणे' इत्यमरः। बधिरतां श्रवणशक्तिशून्यतां दधुः अङ्गीचक्रुः। करिणः स्तम्बेरमाः अरेः शत्रोः प्रतापानलनिर्मूलनायेव प्रतापाग्निनिर्वापणायेव मदोष्मशीकरैः दानवारिभिः ककुभां चक्रं दिशां मण्डलं शिशेकिरे सिषिचुः। तडिद्वच्चञ्चलानि—विद्युद्वत्तरलानि चूडामणीनां चूडारत्नानाम् अर्चींषि किरणाश्चक्षुषां लोचनानाम् उन्मेषम् उन्मीलनं मुमुषुः अचूचुरन्। चूडामणिमरीचिनिचयचाकचक्यचकितानि लोचनानि द्रष्टुं नाशक्नुवन्निति भावः। भूपालः स्वयमपि स्वबलानां स्वसैन्यानां विसिस्मिये। स्वसैन्यपरिमाणं विलोक्य स्वयं हर्षेऽपि चकितो बभूव, का तावदन्येषां कथा। सर्वतः परितः विक्षिप्तचक्षुश्च व्यापारितलोचनश्च आवासस्थानसकाशात् आवासस्थाननिकटात् प्रतिष्ठमानं प्रारब्धप्रयाणं स्कन्धावारं शिबिरम् अद्राक्षीत् इत्यन्वयः। कीदृशम् युगादौ कल्पारम्भे अधोक्षजस्य विष्णोः कुक्षेरुदरात् निष्पतन्तं निर्गच्छन्तं जीवलोकमिव, अथवा कुम्भभुवोऽगस्त्यस्य वदनात् मुखात् उद्भवन्तं प्रादुर्भवन्तं प्लावितभुवनं प्लावितलोकम् अम्भोनिधिमिव वारिराशिमिव। सैन्यमपि प्लावितभुवनमिति समानमेव। अथवा अर्जुनस्य हैहयाधिपस्य बाहुदण्डसहस्रेण भुजदण्डसहस्रेण पूर्वं संपिण्डितं राशीकृतं पश्चादुन्मुक्तं त्यक्तम् अतएव सहस्रधा सहस्रैः प्रकारैः प्रवर्तमानं गच्छन्तं नर्मदायाः मेकलकन्यकायाः प्रवाहमिव। 'देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः। वनमाली बलिध्वंसी कंसारातिरधोक्षजः'। 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका।' 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्।' 'प्रवाहस्तु प्रवृत्तिः स्यात् प्रवहो गमनं बहिः।' 'पानावङ्गे युगः पुंसि युगं युग्मे कृतादिषु।' इति अमरः। प्रसर तातेति—इत्येवमादिप्रवर्तमानानेकसंलापं—वीक्षमाणः कटकं जगामेति दूरेणान्वयः। प्रसर तातेत्यादीनि वाक्यानि नैकस्य कस्यचित् अपि तु विभिन्नजनानाम्। कश्चित् कचिदपरं

भद्र, भग्नचरण इव संचरसि यावदमी पुरःसराः सरभसमुपरि पतन्ति। वाहयसि किमुष्ट्रम्। न पश्यसि निर्दय, शुकशिशुं शयानम्। वत्स रामिल, रजसि यथा न नश्यसि, नो पश्यसि गलति सक्तुप्रसेवकः। किमेवमित्वर, त्वरसे। सौरभेय, सरणिमपहाय हयमध्यं धावसि। धीवरि, विशसि। गन्तुकामा मातङ्गि, मातङ्गमार्गम्। अङ्ग, गलति तिरश्चीना चणकगोणी। गणयसि न मामारटन्तम्। अवटमतटेनावतरसि। सुखमास्स्व स्वैरिणि। सौवीरक, कुम्भो भग्नः। मन्थरक,

---

कथयति प्रसर तात! भाव! मान्य! किं विलम्बसे? किं शनैः व्रजसि? कस्यचिदश्वं शनैश्चलन्तं वीक्ष्य अपरः सोत्प्रासं प्राह तव तुरङ्गमः अश्वस्त्वङ्गति गच्छति न चलतीत्यर्थः। भद्र भग्नचरण इव त्रुटितचरण इव संचरसि। यावदमी पुरःसराः पुरोवर्तिनः सरभसं सरयं ममोपरि पतन्ति। कश्चिदपरस्य उष्ट्रं स्वोपरि समायान्तं विलोक्य उवाच—किम् उष्ट्रं वाहयसि क्रमेलकं चालयसि? निर्दय नृशंस न पश्यसि न विलोकयसि शुकशिशुं कीरशावकं शयानम्। वत्स रामिल! रामिल इति कस्यापि नाम तत्संबोधनम्। यथा रजसि न नश्यसि अदर्शनं न गच्छसि तथा चलेति भावः। नो पश्यसि गलति सक्तुप्रसेवकः। 'गोणी स्यूतप्रसेवौ' इत्यमरः। शणसूत्रनिर्मितवस्त्रमयोधान्यादिरक्षणार्थं 'बोरी' इति भाषायाम्। हे इत्वर गमनशील। 'इण् नशजि' इत्यादिना क्वरप्। किमेवं त्वरसे! सौरभेय! वृषभ। संबोधनम्। सरणिं पन्थानम् अपहाय उज्झित्वा हयानाम् अश्वानां मध्यं किं धावसि? "उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः। अनड्वान् सौरभेयो गौः" इत्यमरः। धीवरि विशसि—जनानां मध्यमिति शेषः। हे मातङ्गि हे चाण्डालकन्ये मातङ्गानां गजानां मार्गं पन्थानं गन्तुकामा यातुकामाऽसि 'चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः' इत्यमरः। 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः। मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः। "अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः" इत्यमरः। अङ्ग संबोधनपदम्। गलति स्रवति तिरश्चीना तिर्यग्भूता चणकानां गोणी प्रसेवकः। आरटन्तम् आक्रोशन्तमपि मां न गणयसि? अवटं गर्तम् अतटेन अवतरसि। तटं नद्यादिकूलम्। 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इत्यमरः। इह तु क्रमिकनिम्नताभाग् भूभागस्तटम् येन अवतरणे सौकर्यं भवति। 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः। अतटेन अमार्गेणेति शंकरः। स्वैरिणि! स्वच्छन्दशीले! सुखमास्स्व उपविश। न ते गमनचिन्तेत्याशयः। हे सौवीरक! कुम्भो भग्नः घटस्त्रुटितः अथवा सौवीरकस्य काञ्जिकस्य कुम्भो भग्न इत्यन्वयः।

खादिष्यसि गतः सन्निक्षुम् । उक्षाणं प्रसादय । कियच्चिरं चिनोषि चेट, बदराणि । दूरं गन्तव्यम् । किमद्यैव विद्रासि द्रोणक, द्राघीयसी दण्डयात्रा विनैकेन निष्ठुरकेण निष्क्रेयमस्माकम् । अग्रतः पन्थाः स्थपुटकः । स्थावरक, यथा न भनक्षि फाणितस्थालीं गरीयान्गण्डक-तण्डुलभारको न निर्वहति दम्यः । दासक, माषीणादमुतो द्राग्दात्रेण मुखघासपूलकं लुनीहि । को जानाति यवसगतं गतानाम् । धव, वारय बलीवर्दान् । वाहीकरक्षितं क्षेत्रमिदम् । लम्बिता शकटी । शाक्करं धुरंधरं धुरि धवलं नियुङ्क्ष्व । यक्षपालित, प्रमदाः पिनक्षि । अक्षिणी किं ते स्फुटिते । हत हस्तिपक रे, दीव्यसि करिकरदण्डे ।

---

मन्थरक ! संबोधनम् । अथवा हे शनैर्गमनशील ! इक्षुं गतोपि सन् खादिष्यसि संप्रति द्रुतं चलेत्यभिप्रायः । कस्यचिद् बलीवर्द उद्भ्रान्तस्तमपर आह उक्षाणं प्रसादय । चेट कियच्चिरं कियत्कालपर्यन्तम् बदराणि चिनोषि ? दूरं विप्रकृष्टान्तरं गन्तव्यम् । कमपि नितान्तं क्षिप्रगामिनमपर आह किमद्यैव विद्रासि धावसि द्रोणक ! द्राघीयसी अतिशयेन दीर्घा दण्डयात्रा सेनायात्रा । 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः' इत्यनेन दीर्घस्य द्राघ् आदेशः, ईयसुन् प्रत्ययश्च । एकेन निष्ठुरकेण नृशंसेन राज्यवधेन वधकर्त्रा शशाङ्केनेति भावः । विना तमन्तरा अस्माकं निष्क्रेयम् ? किम् ऋणमोक्षः स्यात् । नेत्याशयः । तं निगृह्यैव नः कृतार्थता । अग्रतः पन्था मार्गः स्थपुटकः विषमः नतोन्नतः । स्थावरक ! यथा फाणितस्य गुडभेदस्य ( राब इति भाषायाम् ) स्थालीं भाजनं न भनक्षि तथा कुरु इति शेषः । हे गण्डक ! तण्डुलानां भारो गरीयान् । दम्यः दयार्हः 'दम्य वत्सतरौ समौ' इत्यमरः । न निर्वहति न वोढुं शक्नोति । दासक ! चेट ! माषीणात् माषक्षेत्रात् अमुतस्तस्मात् मुखघासपूलकं घासराशिं दात्रेण लवित्रेण । 'दात्रं लवित्रम्' इत्यमरः । 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे' इत्यनेन ष्ट्रन् । लुनीहि छिन्धि । गतानामस्माकं अस्मासु गतेष्वित्यर्थं यवसगतं घासस्य गतं गमनं को जानाति को ज्ञास्यति । केन घासो गृहीतः, गृहीतोपि वा नवेति को नु जानीयात् । धव पुरुष ! वारय वर्जय बलीवर्दान् यतो हि क्षेत्रमिदं वाहीकेन क्षेत्ररक्षकेण रक्षितम् परिपालितम् । लम्बिता शकटी दूरं पृष्ठतः स्थिता गन्त्री शकटधुरि धवलं श्वेतं शाक्करं शूरं तरुणं वा धुरंधरं बलीवर्दं नियुङ्क्ष्व नियोजय । 'धूर्वहधुर्यधौरेयधुरीणाः सधुरंधराः' इत्यमरः । हे यक्षपालित ! प्रमदाः (किं) पिनक्षि मृद्नासि । अक्षिणी लोचने किं ते स्फुटिते न पश्यसीत्यर्थः । कमपि हस्तिपकं हस्तिनः

समद, संमर्दकर्दमे स्खलसि। भ्रातर्भाव विधुरबन्धो, उद्धर पङ्काद-नड्वाहम्। इत एहि माणवक, घनेभघटासंघट्टसंकटे नास्ति निस्तरणम्।' इत्येवमादिप्रवर्तमानानेकसंलापं क्वचित्स्वेच्छामृदितोद्दामसस्यघासविघससुखसंपन्नान्नपुष्टैः केकिकलैः किलकिलायमानैर्मेण्ठवण्ठवठरलम्बनलेशिकलुण्ठकचेटचाटचण्डालमण्डलैराण्डीरैः स्तूयमानम्, क्वचिदसहायैः क्लेशार्जितकुग्रामकुटुम्बिसंपादितसीदत्सौरभेयशम्बलसंवाहनायासावेगागतसंयोगैः स्वयंगृहीतगृहोपस्करणैः

---

शुण्डामवलम्ब्य आरोहन्तं विलोक्य चकितः कश्चिदाह—हत हस्तिपक रे करिणः करदण्डे शुण्डादण्डे दीव्यसि क्रीडसि इति चित्रम् न ते भयम्? हे समद! कर्दमे पंके किं स्खलसि? कस्यापि अनड्वान् पङ्के निमग्नः स साहाय्यार्थं प्रार्थयते—भ्रातः भाव मान्य! विधुराणां पीडितानां बन्धो आत्मीय! अनड्वाहं पङ्काद् उद्धर उत्तारय। इत एहि आगच्छ माणवक बालक! घने गहने इभानां गजानां घटासंघट्टसंकटे समूहसंमर्दविपत्तौ पतितस्य तव निस्तरणम् उद्धारो न भविष्यति, अतः प्रागेव रक्षात्मानं ततः। इत्येवमादयः प्रवर्तमानाः अनेकप्रकारकाः संलापाः यस्मिन् तत् कटकं वीक्षमाणः इति। कटकस्यैव पुनः विशेषणानि। क्वचित् स्वेच्छया यथाभिलाषं मृदितानि खण्डितानि भुक्तानीत्यर्थः, उद्दामैः प्रभूतैः सस्यैः घासैः विघसैश्च सैन्यस्य भुक्तावशेषभोजनैश्च सुखेन संपन्नानि यान्यन्नानि धान्यानि तैः पुष्टैः सैन्यार्थमानीतस्य व्यवहृतादतिरिक्तस्य घासभोजनादिकस्य विनिमयेन विक्रयेण वा लब्धैरन्नैः परिपुष्टैः, केलिकरैः प्रहसनैः सैनिकानां मनोविनोदार्थं नियुक्तैः, किलकिलायमानैः, हसने किलकिलाशब्दं कुर्वाणैः। ('खिलखिलाना' इति हिन्दीभाषायाम्)। मेण्ठानां हस्तिजागरिकाणां वण्ठानाम् अकृतविवाहानां हस्तिपरिचारकविशेषाणां, वठराणां मूर्खाणां लम्बनानां गर्दभदासानां, लेशिकानां घासिकानां, लुण्ठकानां चौराणां, चेटानां दासानां, चाटानां धूर्तानां, चण्डालानाम् अश्वपालानां मण्डलैः समूहैः, राण्डीरैः रण्डापुत्रैः आण्डीरैर्वा प्रगल्भैः। 'काण्डाण्डादीरन्नीरचौ' इति ईरच् प्रत्ययः। स्तूयमानं प्रशस्यमानम्। तेषां सुखसाधनत्वात्। क्वचिदपरत्र असहायैः सहायशून्यैः दुर्विधैः दरिद्रैः कुलपुत्रकैः निन्द्यमानं, तेषां दुःखजनकत्वात्। कुलपुत्राणामेव विशेषणानि—क्लेशेन कष्टेन अर्जितः कुत्सितेन दुष्टेन ग्रामकुटुम्बिना केनापि ग्रामीणगृहपतिना संपादितो यः सीदन् रुग्णत्वात् दुर्बलत्वात् वा पीड्यमानः सौरभेयः वृषभस्तेन शम्बलसंवाहने पाथेयवहने यौ आयासवेगौ प्रयासोद्वेगौ ताभ्यामागतः संयोगो येषाम्। कस्यचित् श्रमस्य वेतनरूपे केनापि गृहपतिना प्रदत्तेन दुर्बलेन बलीवर्देन यत् भारवहनं तेन खिद्यमानं

'इयमेका कथंचिद्दण्डयात्रा यातु। यातु पातालतलं तृष्णाभूतेरभवनिर्भवतु। शिवं सेवा करोतु। स्वस्ति सर्वदुःखकूटाय कटकाय' इति दुर्विधकुलपुत्रकैर्निन्द्यमानम्, क्वचिदतितीक्ष्णसलिलस्रोतःपातिनौगतैरिव ग्रथितैरिव पङ्क्तिभूतैर्जनैरतिद्रुतम्, द्रवद्भिः कृष्णकठिनस्कन्धगुरुलगुडैर्गृहीतसौवर्णपादपीठीकरङ्ककलशपतद्ग्राहावग्राहैः प्रत्यासन्नपार्थिवोपकरणग्रहणगर्वदुर्वारैः सर्वमेव बहिः कारयद्भिर्भूपतिभृतकभारिकैर्महानसोपकरणवाहिभिश्च बद्धवराहवध्रवार्ध्रीण-

---

मानसं येषां तैः, बलीवर्दस्य असमर्थत्वात् क्वचित् स्वयं गृहीतोपस्करणैः स्वस्कन्धसमारोपितसामग्रीकैः 'इयमेका दण्डयात्रा कथंचित् यातु समाप्नुयात्। इतः परं कदाचित् सैन्ययात्रायां भारवहननियोगो नाङ्गीकर्तव्य इति। तृष्णा लोभः पातालतलं यातु यया प्रेरिता वयं क्लेशमेवमनुभवामः। अभवनिः भूतेर्भवतु अस्तु। ऐश्वर्यं जगति नोत्पद्यताम्। सेवा शिवं करोतु कल्याणं करोतु। इयं यात्रा कदाचित् सकुशलं निर्वहेत्। सर्वेषां सर्वप्रकारकाणां दुःखानां कूटाय राशिरूपाय कटकाय स्वस्ति शिवम्। पुनः क्वचित् अतितीक्ष्णे अतितीव्रे सलिलस्रोतसि जलप्रवाहे पततीति तस्यां नावि तरण्यां गतैरिव एकसूत्रप्रोतैरिव, पंक्तिभूतैर्जनैः बद्धश्रेणिकैर्लोकैः समुत्सार्यमाणः पुरोवर्तिजनो यस्मिन् तत् कटकं वीक्षमाणो नरपतिर्जगाम। नावि तीव्रप्रवाहपतितायां एकतो निम्नीभूतायां च सर्वे तदारूढा जनास्तस्या अपरपार्श्वे अल्पावकाशत्वात् परस्परग्रथिता इव पंक्तीभूताश्च यथा भवन्ति तथा ते राजभृत्या अपि पथि श्रेणीभूताः इतरजनान् अपसारयन्ति। तैः अतिद्रुतम् अतिक्षिप्रं द्रवद्भिः धावद्भिः, कृष्णे कठिने च स्कन्धे अंसप्रदेशे गुरवः प्रचण्डा लगुडा दण्डा येषां तैः, गृहीता सौवर्णी हिरण्मयी पादपीठिका करङ्कस्ताम्बूलभाजनम्, कलशः कर्करी, पतद्ग्राहो निष्ठीवनपात्रम्, अवग्राहो स्नानद्रोणी च ( नहाने का टब ) यैः। प्रत्यासन्नानां समीपवर्तिनां पार्थिवानां राज्ञाम् उपकरणग्रहणेन सामग्रीवहनेन यो गर्वः अभिमानस्तेन दुर्वारैः, दुराधर्षैः सर्वमेव बहिः राजपथात् दूरे कारयद्भिः, भूपतीनां भृतकस्य भरणोपयोगिनः उपकरणस्य भारिकैः भारवाहिभिः महानसस्य रसवत्या उपकरणं परिच्छदं वहन्ति नयन्तीति तैः, बद्धा संयता वराहस्य शूकरस्य वध्रेण चर्मणा वार्ध्रीणसा यज्ञीयाश्छागविशेषा यैस्तैः। लम्बमानेन अंसप्रदेशात् अधो लम्बमानेन हरिणस्य मृगस्य चटुकेन शरीरपूर्वभागेन चटकानां कलविङ्कानां जूटैश्च समूहैश्च जटिलैः संभृतैः, शिशुशशकानां बालशशकानां, शाकार्थपत्राणां वेत्राग्राणां च संग्रहं राशिं संगृह्णन्ति इति तैः। 'चटकः कलविङ्कः स्यात्' इत्यमरः। शुक्लेन धवलेन कर्पटेन वस्त्रेण प्रावृते

सैर्लम्बमानहरिणचटुकचटकजूटजटिलैः शिशुशशकशाकपत्रवेत्रा-ग्रसंग्रहसंग्राहिभिः शुक्लकर्पटप्रावृतमुखैकदेशदत्तार्द्रमुद्रागुप्तगोरस-भाण्डैस्तलकतापकतापिकाहस्तकताम्रचरुकटाहसंकटपिटकभारिकैः समुत्सार्यमाणपुरोवर्तिजनम्, क्वचित् 'क्लेशोऽस्माकम् । फलकालेऽन्य एव विटाः समुपस्थास्यन्ते' इति मुखरैः पदे पदे पततां दुर्बल-बलीवर्दानां नियुक्तैः खेटने खेटचेटकैः खेद्यमानासंविभक्तकुलपुत्र-लोकम्, क्वचिन्नरपतिदर्शनकुतूहलादुभयतः प्रजविप्रधावितग्रा-मेयकजनपदम्, मार्गग्रामनिर्गतैराग्रहारिकजाल्मैः पुरःसरजरन्मह-

---

वेष्टिते मुखैकदेशे पात्रवदनैकभागे दत्ता न्यस्ता या आर्द्रा प्रत्यग्रा मुद्रा तया गुप्तानि सुरक्षितानि गोरसस्य तक्रादेः दुग्धस्य वा भाण्डानि भाजनानि यैः । 'दण्डाहतं कालशेयमरिष्टमपि गोरसः' इत्यमरः । तलकोऽग्निशकटिका ('अंगीठी' इति भाषायाम्) तापकोऽपूपादिकरणसाधनं ('तवी')। तापिका काकपालिका कटाहिका । हस्तकः शूलं यत्रारोप्य किंचिन्भक्ष्यम् अग्नौ पच्यते । चरुकटाहः चरुपचनकटाहः एतैः संकटः परिपूर्णो यः पिटकस्तस्य भारिकैः तद्वाहिभिः । "पिटकः पेटकः पीडा मञ्जूषाथ विहंगिका" इत्यमरः । 'भारवाहस्तु भारिकः' इति चामरः । क्वचिदपरत्र क्लेशोऽस्माकम्, प्रयासोऽस्माभिः क्रियते, फलकाले पुरस्कारादि-फलप्राप्तिवेलायामन्ये एव विटा धूर्ताः समुपस्थास्यन्ते इति मुखरैः इति वदद्भिरित्यर्थः । वाचो युक्तिपटुर्वाग्मी वावदूकोऽति वदो वदावदो वक्ता वागीशो वाक्पतिः समौ । वाचो युक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि । स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् । दुर्मुखे मुखराऽबद्धमुखौ शक्तः प्रियंवदः ॥' इत्यमरः । 'र प्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्' इति मुखशब्दात् र प्रत्यये मुखरः । पदे पदे प्रतिपदन्यासं पततां स्खलतां दुर्बलानां कृशानां बलीवर्दानाम् अनडुहां खेटने वाहने नियुक्तैः खेटचेटकैः ग्रामभृतकः । 'खेटकौ ग्रामफलकौ' इति क्षीरस्वामी । खेद्यमानः क्लेश्यमानः पूर्वोक्तप्रकाराभिरुक्तिभि-रित्यर्थः । असंविभक्तः अदूरवर्ती सम्यगकृतदेयांशविभागो वा कुलपुत्रलोको यस्मिन् । कस्मिंश्चिद् राजकर्मणि नियुक्तानां बहूनां जनानां वेतनादेर्भूयान् भागः कतिपयैरेव बलाद् गृहीतेन व्यथता इतरे तान् नानाक्षेपवचनैस्तिरस्कुर्वन्ति । क्वचित् नरपते राज्ञो दर्शनाय साक्षात्काराय कुतूहलात् कौतुकात् उभयतः मार्गस्य उभयपार्श्वाभ्यां प्रजविनः वेगशालिनः प्रधाविता ग्रामेयका ग्रामभवा जनपदा जानपदा यस्मिन् । 'ग्रामाद् यत्खञौ' । मार्गस्थग्रामेभ्यो निर्गतैः संवसथेभ्यो निष्क्रान्तैः । 'समौ संवसथग्रामौ' इत्यमरः । अग्रहारेषु ब्राह्मणावासेषु भवैः आग्रहारिकैः, तेषु जाल्मैः

त्तरोत्तम्भिताम्भःकुम्भैरुपायनीकृतदधिगुडखण्डकुसुमकरण्डैर्घटितपेटकैः सरभसं समुत्सर्पद्भिः प्रकुपितप्रचण्डदण्डिवित्रासनविद्रुतैर्दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्रनिहितदृष्टिभिरसतोऽपि पूर्वभोगपतिदोषानुद्भावयद्भिरतिक्रान्तायुक्तकशतानि च शंसद्भिश्चिरंतनचाटापराधांश्चाभिदधानैरुद्धूयमानधूलिपटलम्, क्वचिदेकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागामिगौडविमृग्यमाणसस्यसंरक्षणम्, अपरैरादिष्टपरिपालकपुरुषपरितुष्टैः 'धर्मः प्रत्यक्षो देवः' इति

---

असमीक्ष्यकारिभिः मूर्खैः नृशंसैर्वा, पुरस्सरद्भिः अग्रतो गच्छद्भिर्जरद्भिः जीर्णशरीरैः वृद्धैः महत्तरैः परिचारकविशेषैः उत्तम्भिता उद्ग्राहिताः अम्भसः कुम्भाः जलकलशाः यैस्तैः । कादम्बर्यामपि—सर्वमङ्गलकुशला कुलवर्धना नाम महत्तरिका प्रशस्ते दिवसे...। इत्यादि । यात्रायां पूर्णकुम्भदर्शनं माङ्गलिकं मन्यते । अतः केचन ग्रामवासिनः स्वसेवकैर्जलकलशानानाययांचक्रुः । उपायनीकृतानि उपाहृतानि दध्नो गुडस्य खण्डस्य कुसुमानां च करण्डाः भाजनानि यैः । 'गुडः स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः' । खण्डोऽस्त्रीशकले वेक्षुविकारमणिभेदयोः । "करण्डो मधुकोशाऽसिकारण्डेषु ललाटके" इति सर्वत्र मेदिनी । घटितपेटकैः विहितसमवायैः । सरभसं सावेगं समुत्सर्पद्भिः समागच्छद्भिः । प्रकुपितानां रुष्टानां प्रचण्डानां भीषणानां दण्डिनां लगुडपाणीनां जनानां वित्रासनेन विद्रुतैः पलायितैः दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्रे राजनि एव निहिता न्यस्ता दृष्टिर्यैः । असतोपि अविद्यमानानपि पूर्वेषां प्रगतानां भोगपतीनां नियोगिनाम् अधिकारिणां दोषान् उद्भावयद्भिः उट्टङ्कयद्भिः । 'दोष आदीनवो मतः' इत्यमरः । अतिक्रान्तानि अतीतानि आयुक्तकानाम् अधिकारिणां शतानि शंसद्भिः निवेदयद्भिः । चिरंतनानां प्राचीनानां चाटानां धूर्तसेवकानां अपराधान् अपचारान् अभिदधानैः पूर्ववर्णितैराग्रहारिकजाल्मैः उद्धूयमानम् उत्थाप्यमानं धूलिपटलं यस्मिन् तत् । क्वचिदन्यत्र एकान्ते प्रवृत्तेन व्रजता अश्ववाराणाम् अश्वारूढसैनिकानां चक्रेण वृन्देन चर्व्यमाणं भक्ष्यमाणं विचार्यमाणं वा आगामिषु गौडेषु विमृग्यमाणम् अन्विष्यमाणं सस्यसंरक्षणं सस्यसंचयो यस्मिन् । गौडानां शत्रुदेशत्वात् तत्र कटकाय कथं धान्यादिप्राप्तिः स्यादिति विषयः । कैश्चन अश्ववारैः मुहुर्मुहुः विमृश्यते । पुनः पुनः विमर्श एव चर्वणम् । अथवा भविष्यद्गौडयुद्धावसरे हर्षसैनिकेभ्य आवश्यकं भविष्यतीति धिया योऽन्नभारः कृषकैः सुरक्षितः स एकान्ते व्रजद्भिः कैश्चिच्चर्व्यते भक्ष्यते इति तात्पर्यम् । अन्यत्र राज्ञादिष्टेन परिपालकपुरुषेण परितुष्टैः प्रसन्नैः कैश्चित् । "देवो राजा प्रत्यक्षो धर्मो मूर्त्तिमान् धर्म एव च" इति स्तुतीरातन्वद्भिः राजानं प्रशसंद्भिः अन्यैश्च सेनापुरुषैः लूयमानं छिन्नं

स्तुतीरातन्वद्भिरपरैर्लूयमाननिष्पन्नसस्यप्रकटितविषादैः क्षेत्रशुचा सकुटुम्बैरेव निर्गतैः प्ररूढप्राणच्छेदैः परितापत्याजितभयैः 'क्व राजा? कुतो राजा? कीदृशो वा राजा?' इति प्रारब्धनरनाथनिन्दम्, शशकैश्च पदे पदे प्रजविप्रचण्डदण्डपाणिपेटकानुबद्धैर्गिरिगुडकैरिव हन्यमानैरितस्ततः संचरद्भिरपरैर्युगपत्परापतितमहाजनग्रस्तैस्तिलशो विलुप्यमानैरनेकजन्तुजङ्घान्तरालनिःसरणकुशलिभिः कुटिलिकाव्यंसितसादिबहुश्वभिः पतल्लोष्टलगुडकोणकुठारकीलकुद्दालखनित्रदात्रयष्टिभिरपि निःसरद्भिरायुषो बलात्कृतकलकलम्, अन्यत्र संघशो घासिकैर्बुसधूलिधूसरितघासजालजालकि-

---

यत् निष्पन्नं सस्यं तेन प्रकटितो विषादः शोको यैस्तैः। क्षेत्रशुचा सस्यध्वंसशोकेन सकुटुम्बैरेव सपरिवारजनैरेव गृहात् निर्गतैः, प्ररूढः उपस्थितः प्राणानामिव च्छेदो येषां जीविकाऽऽधारभूतस्य धान्यस्य नाशात् इत्यर्थः, परितापेन दुःखातिशयेन त्याजितं दूरीकृतं भयं येषां तैः। क्व राजा कुतो राजा कीदृशो वा राजा—इति धिक्कारवचनैः प्रारब्धा नरनाथस्य भूपतेर्निन्दा उपालम्भो यैस्तैः। सेनाया घासिकैरन्तरा समागतानां क्षेत्राणां सस्यानि तथा विलूनानि यथा तेषां पत्राणि अपि नाऽवशिष्टानीति निष्पन्नत्वम्। पदे पदे च प्रजविनां वेगवतां दण्डपाणीनां दण्डहस्तानां पुरुषाणां पेटकैः समूहैः, अनुबद्धैः अनुसृतैः, हन्यमानैस्ताड्यमानैर्गिरिगुडकैरिव लोष्टैरिव इतस्ततः संचरद्भिः लुठद्भिरिव शशकैः हेतुभूतैः बलात् कृतः कोलाहलो यस्मिन् तत्। इतस्ततो धावतः शशकान् दृष्ट्वा जनाः कोलाहलं चक्रुरित्याशयः। अपरैः कैश्चित् शशकैः पुनः युगपत्परापतितैः ग्रहणार्थं सरभसं समागतैः जनैः पुरुषैः तिलशः खण्डशो विलुप्यमानैः विभज्यमानैः, हठाहरणप्रवृत्तानां जनानां कस्यचित् हस्ते शशकस्य कर्णः समागतः, कस्यचित् एकश्चरणः, परस्य पुच्छमिति स च्छिन्नभिन्नो बभूव। अन्यैः कैश्चन अनेकेषां बहूनां जन्तूनां प्राणिनां जङ्घान्तरालात् निःसरणे निष्क्रमणे कुशलिभिश्चतुरैः कुटिलिकया तिर्यक्गत्या व्यंसिता वंचिता बहवः श्वानो यैस्तैः, पतन्ति लोष्ठानि लगुडाः, कोणाः दण्डाः, कुठाराः परश्वधाः, कीलाः शङ्कवः, कुद्दालाः भूविदारकसाधनभेदाः, खनित्राणि प्रविदारणानि, दात्राणि लवित्राणि, यष्टयो लगुडादिका येषु तैरपि आयुषो बलात् निःसरद्भि अक्षतैरेवेत्यर्थः। 'लोष्ठानि लेष्ठानि पुंसि कोटिशो लोष्ठभेदनः'। 'प्राजनं तोदनं तोत्रं खनित्रमवदारणम्। दात्रं लवित्रम्' इति सर्वत्रामरः॥

अन्यत्र क्वचित् पुनः संघशः धावमानैः घासिकैरुद्धूयमानधूलिपटलमिति दूरेणान्वयः। संघशः बहुशः बुसेन धूल्या रजसा च धूसरितं मलिनितं यत् घासजालं

तजघनैश्च पुराणपर्याणैकदेशदोलायमानदात्रैश्च शीर्णोर्णाशकलशिथिलमलिनमलकुथैश्च प्रभुप्रसादीकृतपाटितपटच्चरचलच्चोलकधारिभिश्च धावमानैरुद्धूयमानधूलिपटलम्, क्वचिदेकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागामिगौडविग्रहम्, क्वचित्पङ्किलप्रदेशपूरणादेशाकुलसकललोकलूयमानतृणपूलकम्, क्वचित्तरुतलवर्तिवेत्रिवेत्रविंत्रास्यमानशाखिशिखरगतविक्रोशद्विवादिब्राह्मणम्, क्वचित्कुलुण्ठकपाशविवेष्ट्यमानग्रामीणग्रामाकृष्टकौलेयकम्, क्वचिदन्योन्यविभवस्पर्धोद्धुरराजपुत्रवाह्यमानवाजिसंघट्टमण्डितम्, अनेकवृत्तान्ततया कौतुकजननम्, प्रलयजलधिमिव जगद्ग्रासग्रहणाय प्रवृत्तम्, पातालमिव

---

घासराशिस्तेन जालकितम् आचितं जघनं येषां तैः, पुराणस्य जीर्णस्य पर्याणस्य पल्ययनस्य एकदेशे एकप्रान्ते दोलायमानं अवलम्बमानं दात्रं लवित्रं येषाम् तैः, शीर्णानि जीर्णानि ऊर्णाशकलानि येषाम् एतादृशाः शिथिलाः स्रस्ताः मलिनाश्च मलीमसाश्च मलकुथा वस्त्रभेदाः येषां तैः। प्रभुणा राज्ञा प्रसादीकृतं पुरस्कृतं पाटितस्य च्छिन्नस्य पटच्चरस्य जीर्णवस्त्रस्य चोलकं कूर्पासकं धारयन्तीति तैः 'पटच्चरं जीर्णवस्त्रम्' 'संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम्' इत्युभयत्र अमरः। क्वचित् एकान्ते प्रवृत्तैर्गच्छद्भिः अश्ववारणां सादिनां चक्रैः वृन्दैश्चर्व्यमाणो मुहुर्मुहुरालोच्यमानः आगामी भावी गौडेन सह हर्षस्य विग्रहो युद्धं यस्मिन्। सैनिकाः भावियुद्धविषये चर्चा समाचरन्ति कस्य विजयः पराजयो वा भविष्यतीति।

क्वचित् पङ्किलस्य कर्दममयस्य प्रदेशस्य प्रान्तस्य पूरणाय यः आदेश आज्ञा तेन आकुलेन व्यग्रेण सकलेन लोकेन समग्रजनेन लूयमानं छिद्यमानं तृणपूलकं तृणराशिः यस्मिन्। क्वचित् तरुतलवर्तिना वेत्रिणा वेत्रवता राजकर्मचारिणा वित्रास्यमानस्तर्ज्यमानः शाखिशिखरगतः वृक्षाग्रसमारूढः विक्रोशन् शपन् विवादी ब्राह्मणो यस्मिन्। क्वचित् कुलुण्ठकानां कुक्कुरबन्धनलगुडानां पाशैः विवेष्ट्यमानः संयम्यमानो ग्रामीणानां ग्रामवासिनां ग्रामेण समूहेन आकृष्टः प्रलोभितः कौलेयकः श्वा यस्मिन्। क्वचित् अन्योन्यं प्रति विभवस्पर्धया ऐश्वर्यासूयया उद्धुरैः उद्रिक्तैः राजपुत्रैः राजकुमारैर्वाह्यमानेन हयानां संघट्टेन सम्मर्दैन मण्डितम्। केपि राजकुमाराः समानैश्वर्यादिकारणात् परस्परं स्पर्धाभिभूताः सर्वत्र प्रतिद्वन्द्वितां चक्रुरिति भावः। अनेकवृत्तान्ततया नानाप्रकारकत्वात् कौतुकजनकं कौतूहलकारकम्। प्रलयजलधिमिव कल्पान्तसागरमिव जगदेव ग्रासः कवलस्तस्य ग्रहणाय प्रवृत्तम्। 'ग्रासस्तु

महाभोगिनां गुप्तये समुत्पादितम्, कैलासमिव परमेश्वरवसतये सृष्टम्, दृश्यमानसकलप्राणिपर्यायं चतुर्युगसर्गकोशमिव प्रजापतीनां क्लेशबहुलमपि तपःकरणमिव क्रमकारणं कल्याणानाम्, एवं च वीक्षमाणः कटकं जगाम।

## सैनिकानां संवादाः

आसन्नवर्तिनां च तत्रभवताम् 'मांधात्रा प्रवर्तिताः पन्थानो दिग्विजयाय। अप्रतिहतरथरंहसा रघुणा लघुनैव कालेनाकारि ककुभां प्रसादनम्। शरासनद्वितीयः करदीचकार चक्रं क्रमागतभुजबला-

---

कवलः पुमान्' इत्यमरः। ग्रहणम् एकत्र आत्मसात्करणम् अन्यत्र आत्मनि निमज्जनम्। पातालं हि महाभोगिनां शेषादीनां महानागानां गुप्तये रक्षार्थं समुत्पादितं कटकं तु महाभोगवतां राज्ञां गुप्तये। कैलाशो हि परमेश्वरस्य शिवस्य वसतये निवासाय सृष्टः, कटकं तु राज्ञः। दृश्यमानो विलोक्यमानः सकलानां समग्राणां प्राणिनां भूतानां पर्यायः क्रमेणावस्थानं यस्मिन्, अथवा परितः सर्वतः आयः आगमनं यस्मिन् तत्। प्रजापतीनां चतुर्युगसर्गकोशमिव यत आदाय प्रजापतयश्चतुर्युगात्मसृष्टेः सर्वप्राणिनो जनयन्ति इति भावः। कटकपक्षे यत्र सर्वेपि प्राणिनः क्रमेण आयान्ति यान्ति च। तपःकरणं हि स्वयं क्लेशबहुलमपि कष्टमयमपि कल्याणानां मंगलानां क्रमकारणम् उत्तरोत्तरकारणं भवति कटकमपि दुष्टोपद्रवनिवारणात् तथेति भावः।

आसन्नवर्तिनां समीपवर्तिनां तत्रभवतां मान्यानां बाहुशालिनां भुजभाजां पार्थिवकुमाराणां राजसूनूनाम् इत्येवंप्रायान् एवमादीन् आलापान् उक्तीः शृण्वन् आकर्णयन् आवासम् आससाद प्राप इत्यन्वयः। 'तत्रभवताम्' इत्यस्य स्थाने 'तत्रभवता' इति टीकाकारसम्मतः पाठो वरीयान्। तदा 'तत्रभवता' इति 'मांधात्रा' इत्यस्य विशेषणम्। माननीयेन मांधात्रा सूर्यवंशीयेन युवनाश्वतनयेन राज्ञा दिग्विजयाय दिशां विजयाय पन्थानः मार्गाः प्रवर्तिताः, पन्थाः प्रदर्शित एव। मान्धाता धुन्धुमारश्च हरिश्चन्द्रः पुरूरवाः। भरतः कार्तवीर्यश्च षडेते चक्रवर्तिनः॥ प्रतिहतं दुर्वारं रथस्य स्यन्दनस्य रंहो रयो यस्य तेन रघुणा दिलीपपुत्रेण राज्ञा लघुनैव अल्पीयसैव कालेन समयेन ककुभां दिशां प्रसादनं निष्कण्टकीकरणम् अकारि चक्रे। शरासनं द्वितीयं यस्य सः चापमात्रसहायः पाण्डुर्विचित्रवीर्यापत्यं क्रमागतानां वंशपरम्पराप्राप्तानां भुजबलेन बाहुबलेन अभिजनेन उच्चकुलेन धनमदेन च अवलिप्तानां दृप्तानां भूभुजां भूपतीनां चक्रं मण्डलं करदीचकार वशंवदमकरोत्। करं राजदेयभागं ददातीति करदः। न करदं करदं सम्पद्यमानं चकारेति करदीचकार। 'अभूततद्भावे कृभ्वस्ति-

भिजनधनमदावलिप्तानां भूभुजां पाण्डुः । पाण्डवः सव्यसाची चीनविषयमतिक्रम्य राजसूयसंपदे क्रुध्यद्गन्धर्वधनुष्कोटिटङ्कारकूजितकुञ्जं हेमकूटपर्वतं पराजेष्ट । संकल्पान्तरितो विजयस्तरस्विनाम् । सहिमहिमवद्व्यवहितोऽप्युवाह बाहुबलव्यतिकरकातरः करं कौरवेश्वरस्य किङ्कर इवाकृती द्रुमः । नातिजिगीषवः खलु पूर्वे येनाल्प एव भूभागे भूयांसो भगदत्तदन्तवक्त्रक्राथकर्णकौरवशिशुपालसाल्वजरासंधसिन्धुराजप्रभृतयोऽभवन्भूपतयः । संतुष्टो राजा युधिष्ठिरो यो ह्यसहत समीप एव धनंजयजयजनितजगत्कम्पः किंपुरुषाणां राज्यम् । अलसश्चण्डकोशो यो न प्राविक्षत्क्ष्मां जित्वा स्त्रीराज्यम् । ह्रसीय एवान्तरं तुषारगिरिगन्धमादनयोः उत्सा-

---

योगे संपद्यकर्तरि च्विः' इति च्वि-प्रत्ययः । 'भागधेयः करो बलिः' इत्यमरः । 'शतांगः स्यन्दनो रथः' इत्यमरः । सव्यसाची सव्येन वामकरेणापि धनुषि शरं स्थापयतीति सव्यसाची । पाण्डवोऽर्जुनो राजसूयसंपदे राजसूयाख्ययज्ञैश्वर्याय तच्छोभायै तदर्थमावश्यकधनाहरणाय वा चीनविषयं तदाख्यदेशम् अतिक्रम्य विलङ्घ्य 'विषयो देशे' इति सूत्रेण साधुः । क्रुध्यतां कुप्यतां गन्धर्वाणां देवगायनानां धनुष्कोटिटङ्कारेण चापकोटिध्वनिना कूजिताः मुखराः कुञ्जाः यस्य तं हेमकूटाख्यं पर्वतं गिरिं पराजेष्ट पराजितवान् । तरस्विनां बलिनां विजयः संकल्पेन अन्तरितः इच्छामात्रव्यवहितः, संकल्पकरणे तत्सिद्धौ च क्षणमात्रमप्यन्तरं न भवतीति भावः । 'तरसी बलरंहसी' इत्यमरः । अकृती अकुशलो द्रुमस्तन्नामा किन्नरराजः कौरवेश्वरस्य दुर्योधनस्य बाहुबलव्यतिकरेण भुजबलमेव व्यतिकरो व्यसनं विपत्तिरित्यर्थः तेन कातरः व्याकुलः सन्, सहिमेन हिमवता हिमावृतेन हिमालयेनापि व्यवहितः करं बलिम् उवाह उपाहरत् । यद्यपि दुर्योधनस्य द्रुमस्य च राज्ययोरन्तराले दुर्गमो हिमवान् दुर्गवत् अतिष्ठत् तेन अनायासमेव सुरक्षितोऽपि द्रुमः किङ्कर इव दास इव दुर्योधनस्य करदो बभूवेति तात्पर्यम् । पूर्वे राजानो नातिजिगीषवः खलु, कुत इदमुच्यते इति चेत् येन यतः अल्पे एव लघावेव भूभागे भूप्रदेशे भूयांसोऽनेके भगदत्तप्रभृतयो भूपतयः भूभृतोऽभवन् । स्वल्पेनैव संतुष्टो राजा युधिष्ठिरो धर्मतनयो यो हि धनञ्जयस्य मध्यमपाण्डवस्य अर्जुनस्य जयेन जनितः कृतो जगतो विश्वस्य कम्पो वेपथुर्येन सः किंपुरुषाणां किन्नराणां राज्यं समीपे एव निकटे एव स्वराज्यस्य असहत । 'गवियुधिभ्यां स्थिरः' इत्यनेन सस्य षत्वम् । अलसः प्रमादी खलु चण्डकोषो नाम नृपतिः, यो हि स्त्रीराज्यं जित्वा क्ष्मां भूविवरं पातालमित्यर्थः न प्राविक्षत् प्रविवेश तज्जयाय ।

हिन: । किष्कुस्तुरुष्काविषयः । प्रादेशः पारसीकदेशः । शशपदं शकस्थानम् । अदृश्यमानप्रतिप्रहारे पारियात्रे यात्रैव शिथिला । शौर्यशुल्कः सुलभो दक्षिणापथः । दक्षिणार्णवकल्लोलानिलचलितचन्दनलतासौरभसुन्दरीकृतदरीमन्दिराद्दर्दुरादद्रेर्नेदीयसि मलयः मलयलग्न एव च महेन्द्रः' इत्येवंप्रायानुद्योगद्योतकानालापान्पार्थिवकुमाराणां बाहुशालिनां शृण्वन्नेवाससादावासम् । मन्दिरद्वारि चोभयतः सबहुमानं भ्रूलताभ्यां विसर्जितराजलोकः प्रविश्य चावततार बाह्यास्थानमण्डपस्थापितमासनमाचक्राम । अपास्तस-

---

अथवा यो हि क्ष्मां जित्वा स्त्रीराज्यं जेतुं तत्र न प्राविशत् इत्यप्यन्वयः । ह्रसीयः अत्यल्पम् एव अन्तरं तुषारगिरिगन्धमादनयोः हिमालयगन्धमादनयोः । तुरुष्काणां तुरुष्काख्यजातिविशेषजनानां तुर्क इति प्रसिद्धानां विषयो देशः किष्कुर्हस्तमात्रान्तरे इत्यर्थः 'किष्कुर्हस्ते वितस्तौ च' इत्यमरः । पारसीकदेशः प्रादेशमात्रान्तरः । शकानां स्थानं शशपदमात्रम् । तत्लुतिपरिमितान्तरमिति यावत् । 'प्रदेशिन्यादिभिः सार्द्धमङ्गुष्ठे वितते सति, प्रादेशतालगोकर्णवितस्तयो यथा क्रमम्' इति अभिधानचिन्तामणिः । न दृश्यमानः प्रतिप्रहारः प्रतिपक्षिणां प्रहारो यस्मिन् तस्मिन् पारियात्रे यात्रैव दण्डयात्रैव शिथिला निष्प्रयोजना । पारियात्रः कुलपर्वतानामन्यतमो देशः । 'महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ।' शौर्यमेव बलमेव शुल्को मूल्यं यस्य तादृशः खलु दक्षिणापथो दक्षिणप्रदेशः । सुलभः सुप्राप्यः । दक्षिणार्णवस्य दक्षिणसमुद्रस्य कल्लोलानाम् ऊर्मीणां ये अनिलाः पवनाः तैश्चलितानां आन्दोलितानां चन्दनलतानां मलयजतरूणां सौरभेण आमोदेन सुन्दरीकृतानि मनोज्ञीकृतानि दर्य एव मन्दिराणि यस्य तस्मात् दर्दुराख्यात् अद्रेः पर्वतात् नेदीयसि एव अतिनिकटे एव मलयस्तदाख्यो देशः पर्वतश्च । मलयलग्न एव महेन्द्रस्तन्नामा पर्वतः । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु । महत्सूल्लोलकल्लोलौ स्यादावर्त्तोऽम्भसां भ्रमः' । 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः । पृषदश्वो गन्धवहो गन्धवाहाऽनिलाशुगाः । समीरमारुतमरुज्जगत्प्राणसमीरणाः । नभस्वद्वातपवनपवमानप्रभञ्जनाः' । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' । 'दरी तु कन्दरो वा स्त्री' इति सर्वत्रामरः । उद्योगम् उत्साहं द्योतयन्तीति तेषां बाहुशालिनां पार्थिवकुमाराणाम् इत्येवंप्रायान् आलापान् शृण्वन् आवासम् आससाद । मन्दिरस्य द्वारि च उभयतः सबहुमानं सादरं भ्रूलताभ्यां भ्रूसंकेतेन विसर्जितो राजलोको राजकं येन सः ( आवास-स्थानं ) प्रविश्य अवततार । बाह्यास्थानमण्डपे

मायोगश्च क्षणमासिष्ट ।

## हंसवेगागमनसूचना

अथ तत्र प्रतीहारः पृथ्वीपृष्ठप्रतिष्ठापितपाणिपल्लवो विज्ञापितवान्—'देव, प्राग्ज्योतिषेश्वरेण कुमारेण प्रहितो हंसवेगनामा दूतोऽन्तरङ्गस्तोरणमध्यास्ते' इति । राजा तु 'तमाशु प्रवेशय' इति सादरमादिदेश । अथ दक्षतया क्षितिपालादराच्च प्रतीहारः स्वयमेव निरगात् । अनन्तरं च हंसवेगः सविनयमाकृत्यैव नयनानन्दसंपादनसुभगाभोगभद्रया समुल्लङ्घ्यमानगुणगरिमा प्रभूतप्राभृतभृतां पुरुषाणां समूहेन महतानुगम्यमानः प्रविवेश राजमन्दिरम् । आरादेव पञ्चाङ्गालिङ्गिताङ्गनः प्रणाममकरोत् । 'एह्येहि' इति

---

स्थापितं विन्यस्तम् आसनं विष्टरम् आचक्राम अध्यतिष्ठत् । अपास्तस्त्यक्तः समायोगः यात्राविषो येन सः क्षणं स्वल्पकालम् आसिष्ट उपविवेश ।

अथ तत्र प्रतिहारो द्वारपालः पृथिवीपृष्ठे वसुधातले प्रतिष्ठापितौ विन्यस्तौ पाणिपल्लवौ येन सः विज्ञापितवान् न्यवेदयत् । देव ! प्राग्ज्योतिषेश्वरेण कामरूपदेशाधिपतिना कुमारेण भास्करवर्माऽपरनाम्ना प्रहितः प्रेषितो हंसवेगनामा हंसवेगाभिधोऽन्तरङ्गो दूतः अतिविश्वसनीयस्तोरणं बहिर्द्वारमध्यास्ते अधितिष्ठति इति । राजा तु श्रीहर्षस्तु 'तमाशु प्रवेशय' तं शीघ्रं समानयेति सादरमादिदेश आज्ञप्तवान् । अथ दक्षतया निपुणत्वात् क्षितिपालादराच्च दूतं प्रति भूपतेरादरबुद्धिं विभाव्य तत्कारणात् च प्रतिहारः स्वयमेव तदानयनाय निरगात्, न त्वन्यं कंचित् स्वानुचरं प्रजिघाय । अनन्तरं हंसवेगानयनानन्तरं दर्शकलोचनानां आनन्दसंपादनाय निर्वृतिजननाय सुभगेन आभोगेन विस्तारेण भद्रया शोभनया आकृत्या आकारेणैव च समुल्लङ्घ्यमानः अतिक्रम्यमाणः गुणानां गरिमा इतरगुणानां गौरवं महिमा वा यस्य सः । हंसवेगो हि कमनीयरूपो विशालशरीरः प्रियदर्शनः प्रभाववान् सर्वशिष्टाचारचतुर आसीत् । तथापि तस्याकृतिरितरगुणातिशायिनी बभूवेति भावः । 'प्रियस्थिर' इत्यादिना गुरोर्गरादेशे इमनिच्प्रत्यये रूपम् । प्रभूतानि प्रचुराणि प्राभृतानि उपायनानि बिभ्रतीति तेषां प्रभूतप्राभृतभृतां पुरुषाणां जनानां महता विशालेन समूहेन समुदायेन अनुगम्यमानः अनुस्रियमाणः राजमन्दिरं राजभवनं प्रविवेश । "प्राभृतं ढौकनं लञ्चोत्कोचः कौशलिकाऽऽभिधा" इत्यभिधानचिन्तामणिः । आरादेव दूरादेव पञ्चभिरङ्गैरालिङ्गितमङ्गनम् अजिरं येन सः प्रणाममकरोत् नमश्चक्रे । "आराद्दूरसमीपयोः' इत्यमरः । पाणिभ्यां पद्भ्यां मस्तकेन चेति पञ्चभिरङ्गैः ।

सबहुमानमाहूतश्च प्रधावितोऽपसृतः पादपीठलुठितललाटलेखो न्यस्तहस्तः पृष्ठे पार्थिवेनोपसृत्य भूयो नमश्चक्रे। स्निग्धनरेन्द्रदृष्ट्या निर्दिष्टमविप्रकृष्टं स प्रदेशमध्यास्त। ततो राजा तिरश्चीं तनुमीषदिव दधानश्चामरग्राहिणीमन्तरालवर्तिनीं समुत्सार्य संमुखीनस्तं सप्रश्रयं पप्रच्छ—'हंसवेग, श्रीमान्कच्चित्कुशली कुमारः' इति। स तमन्ववादीत्—'अद्य कुशली येनैवं स्नेहस्नपितया सौहार्दद्रवार्द्रया सगौरवं गिरा पृच्छति देवः' इति।

## आभोगाख्यच्छत्रार्पणोपन्यासः।

स्थित्वा च मुहूर्तमिव पुनः स चतुरमुवाच—'चतुरम्भोधिभोगभूतिभाजनभूतस्य देवस्य सद्भावगर्भमपहाय हृदयमेकमन्यदनुरूपं प्राभृतमेव दुर्लभं लोके तथाप्यस्मत्स्वामिना संदेशमशून्यतां

---

अष्टाभिरङ्गैश्चेत् 'जानुभ्यां च तथा पद्भ्यां पाणिभ्यामुरसा धिया। शिरसा वचसा दृष्ट्या प्रणामोष्टाङ्ग ईरितः।' पार्थिवेन राज्ञा च 'एहि एहि' आगच्छ आगच्छ इति सबहुमानं सादरातिशयम् आहूतः आकारितः प्रधावितः द्रुतमुपसृतः ततः किंचिदपसृतः सम्मानप्रदर्शनायेति भावः, हर्षस्य पादपीठे लुठिता घृष्टा ललाटलेखा भालपट्टिका येन सः, राज्ञा पृष्ठे न्यस्तहस्तः प्रीतिप्रदर्शनाय पृष्ठप्रतिष्ठापितपाणिश्च उपसृत्य अभ्युपेत्य भूयः पुनरपि नमश्चक्रे प्रणनाम। स्निग्धया प्रीतिमधुरया नरेन्द्रस्य दृष्ट्या दृशा निर्दिष्टं कृतसंकेतम् अविप्रकृष्टं प्रत्यासन्नं प्रदेशं स्थानम् अध्यास्त। ततो राजा तिरश्चीं तिर्यगवस्थितां तनुं देहम् ईषदिव किंचिदिव दधानः आकलयन् मनाक् परिवर्त्य अन्तरालवर्त्तिनीम् अन्तरा स्थितां चामरग्राहिणीं समुत्सार्य सम्मुखीनः अभिमुखो भूत्वा सप्रश्रयं सविनयं पप्रच्छ अन्वयुङ्क्त। 'हंसवेग! श्रीमान् कच्चित् कुशली कुमारः' 'कच्चित् कामप्रवेदने। प्रश्ने हर्षे मङ्गले च।' इति मेदिनी। यत् पृच्छतः प्रष्टुस्तथाभिलाषोपि भवति तत्र कच्चिदिति प्रयुज्यते। स हंसवेगस्तं हर्षम् अन्ववादीत् उदतरत्-'अद्य कुशली' येनैवं स्नेहस्नपितया प्रेमार्द्रया सौहार्दद्रवेण सख्यरसेन सिक्तया गिरा वाचा सगौरवम् आस्थया सह पृच्छति देव इति।

स्थित्वा च मुहूर्त्तमिव कंचित् कालं तूष्णीमवस्थाय हंसवेगः पुनश्चतुरं यथा स्यात्तथा निपुणमित्यर्थः उवाच—चतुर्णाम् अम्भोधीनां भोगभूतेः भोगैश्वर्यस्य भाजनभूतस्य पात्रभूतस्य देवस्य कृते सद्भावगर्भं सद्भावपूर्णम् एकं हृदयम् अपहाय उज्झित्वा अन्यत् अपरम् अनुरूपं योग्यं प्राभृतमेव उपायनमेव दुर्लभं दुष्प्रापं लोके भुवने, तथाप्यस्मत्स्वामिना नः प्रभुणा कुमारेण सन्देशम् अशून्यतां नयता वाचिकम्

नयता पूर्वजोपार्जितं वारुणातपत्रमाभोगाख्यमनुरूपस्थानन्यासेन कृतार्थीकृतमेतत् । अस्य च कुतूहलकृन्ति बहूनि आश्चर्याणि दृश्यन्ते । प्रतिदिवसं प्रविशति शैत्यहेतोश्छायायाः किरणसहस्रादेकैकः सोमस्य रश्मिरस्मिन् । अस्मिन्प्रविष्टे प्रध्यानानन्तरं स्वादवो दन्तवीणोपदेशाचार्याश्च्योतन्ति चन्द्रभासामम्भसां मणिशलाकाभ्यो यावदिच्छमच्छा धाराः । प्रचेता इव यश्चतुर्णामर्णवानामधिपतिर्भूतो भावी वा तमनुगृह्णाति च्छायया नेतरम् । इदं च न सप्तार्चिर्दहति, न पृषदश्वो हरति, नोदकमार्द्रयति, न रजांसि मलिनयन्ति, न जरा जर्जरयति । एतत्तावदनुगृह्णातु दृशा देवः, संदेशमपि विस्रब्धं श्रोष्यति ।' इत्येवमभिधाय विवृत्यात्मीयं पुरुषमभ्यधात्—'उत्तिष्ठ । दर्शय देवस्य' इति ।

---

अरिक्तं कुर्वता पूर्वजैः पूर्वपुरुषैः उपार्जितं लब्धं वरुणस्येदं वारुणम् आभोगनामकं आतपत्रं छत्रम् अनुरूपस्थाने योग्यपात्रे भवति न्यासेन निक्षेपेण कृतार्थीकृतं कृतकृत्यं सम्पादितम् । अस्य च च्छत्रस्य कुतूहलकृन्ति अद्भुतानि बहूनि आश्चर्याणि चित्राणि विचित्रव्यापाराः शक्त्यो दृश्यन्ते । प्रतिदिवसं प्रत्यहम् अस्य छायाया अनातपस्य शैत्यहेतोः शीतलीकरणाय सोमस्य मृगाङ्कस्य किरणसहस्रात् रश्मिसमूहात् एकैको रश्मिः प्रविशति । अस्मिन् प्रविष्टे अस्य छायायां प्रवेशानन्तरं प्रध्यानमात्रेणैव चिन्तनमात्रेणैव स्वादवः सुखदाः दन्तवीणोपदेशाचार्याः शैत्यातिशयेन दन्तानामन्योन्याघातजन्यकटकटाध्वनिरेव उपदेशस्तस्याचार्याः देशिकास्तद्ध्वनिहेतवः चन्द्रभासां चन्द्रोज्ज्वलानाम् अम्भसां सलिलानाम् अच्छा निर्मला धारा आसाराः मणिशलाकाभ्यो यावदिच्छम् इच्छानुसारं च्योतन्ति प्रस्रवन्ति । यः खलु प्रचेता इव वरुण इव चतुर्णामर्णवानां सागराणाम् अधिपतिः अधिनायको भूतो भावी वा । तमिदं छायया अनुगृह्णाति नेतरम् । 'प्रचेता वरुणः पाशी यादः पतिरपां पतिः' इत्यमरः । इदं च छत्रं न सप्तार्चिर्दहनो दहति भस्मसात् करोति, न पृषदश्वो मारुतः हरति उत्क्षिप्यान्यत्र नेतुं शक्नोति, नोदकं जलम् आर्द्रयति क्लेदयति, न रजांसि धूलिनिचयाः मलिनयन्ति, न जरा न वार्धक्यं जर्जरयति अवसादयति । देवस्तावदिदं दृशा दृष्टिपातेन अनुगृह्णातु कृतार्थीकरोतु । ततश्च सन्देशमपि विस्रब्धं यथा स्यात् तथा श्रोष्यति । इत्येवमभिधाय इतीरयित्वा विवृत्य परिभ्रम्य पुरुषं यस्य पार्श्वे छत्रमासीत् तम् अभ्यधात् अभाणीत्-उत्तिष्ठ दर्शय । देवस्येति कर्मणि षष्ठी । 'सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः' इत्यमरः ।

## छत्रविकोषीकरणम् ।

स वचनानन्तरमुत्थाय पुमानूर्ध्वीचकार तद्धौतदुकूलकलिपताच्च निचोलकादकोषीत्। आकृष्यमाण एव च यस्मिन्नतिसितमहसि सरभसमहासीव हरेण रसातलादुदलासीव शेषफणिफणाफलकमण्डलेन, अस्थायीव चक्रीभूयान्तरिक्षे क्षीरोदेन, अघटीव गगनाङ्गने गोष्ठीबन्धः शारदेन बलाहकव्यूहेन, विश्रान्तमिव विततपक्षतिना वियति पितामहविमानहंसयूथेन, अत्रिनेत्रनिर्गतस्य धवलधाममण्डलमनोहरो दृष्ट इव जनेन जन्मदिवसः कुमुदबन्धोः, प्रत्यक्षीकृत इवोद्गमनक्षणो नारायणनाभिपुण्डरीकस्य, आहितेव कौमुदीप्रदोषदर्शनानन्दतृप्तिरक्ष्णाम्, उदमाङ्क्षीदिव मन्दाकिनीपुलिनमण्डलं महदम्बरोदरे, परिवर्तित इव दिवसः पौर्णमासीनिशया

---

स पुमान् पुरुषः तद्वचनानन्तरमुत्थाय तच्छत्रमूर्ध्वीचकार उत्तम्भयामास। धौतात् क्षालितात् दुकूलकलिपतात् पट्टमयात् निचोलकात् आवरणात्, अकोषीत् च निष्कासयामास। अतिसितं नितरां धवलं महस्तेजो यस्य तस्मिन् छत्रे आकृष्यमाणे एव निष्कासितमात्रे एव हरेण शिवेन सरभसं प्रचण्डं यथा स्यात् तथा अहासीव हसितमिव। शेषफणिनः शेषनागस्य फणानां फलकमण्डलेन फटानां पटलेन रसातलात् पातालतलात् उदलासीव उल्लसितमिव। अन्तरिक्षे नभसि क्षीरोदेन क्षीरसागरेण चक्रीभूय मण्डलीभूय अस्थायीव स्थितमिव। शारदेन शरत्कालिकेन धवलेनेति यावत् बलाहकव्यूहेन मेघनिवहेन गगनाङ्गने आकाशमण्डले गोष्ठीबन्धः परिषद् अघटीव अकारीव। वितता विस्तृता पक्षतिः पक्षमूलं यस्य तेन पितामहस्य ब्रह्मणो विमानस्य हंसयूथेन हंससमूहेन वियति नभसि विश्रान्तमिव ब्रह्मणो हंससमूहः पक्षौ प्रसार्य नभसि स्थितः किम् इति मतिरभूज्जनानां विलोक्य विततं तच्छत्रमन्तरिक्षे। अत्रिनेत्रनिर्गतस्य अत्रिमुनिनयनसमुत्पन्नस्य कुमुदबन्धोः शशाङ्कस्य धवलेन शुभ्रेण धाममण्डलेन प्रकाशराशिना मनोहरो मनोज्ञः जन्मदिवसः उत्पत्तिवासर इव जनेन लोकेन दृष्टः। चन्द्रमा हि अत्रिनेत्रसमुत्पन्नः। यथा रघौ कालिदासः—'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः' इति। नारायणनाभिपुण्डरीकस्य विष्णुनाभिकमलस्य उद्गमनक्षण आविर्भावसमय इव प्रत्यक्षीकृतः अवालोकि। आहितेव संपादितेव अक्ष्णां दृशां कौमुदीयुक्तस्य ज्योत्स्नाशालिनः प्रदोषस्य रजनीमुखस्य दर्शनेन विलोकनेन यः आनन्दस्तोषस्तस्य तृप्तिः। अम्बरोदरे अन्तरिक्षमण्डले महत् मन्दाकिन्याः सुरस्रवन्त्याः पुलिनमण्डलमिव उदमाङ्क्षीत् उन्ममज्ज। परिवर्तित इव दिवसः

मन्दमन्दमिन्दूदयसंदेहदूयमानमानसैर्विघटितं घटमानचञ्चुच्युत-मृणालकोटिभिरासन्नकमलिनीचक्रवाकमिथुनैः शरज्जलधरपटला-शङ्कासंकोचितकेकारवमूकमुखपुटैः पराङ्मुखीभूतं भवनशिखण्डि-मण्डलैः, प्रबुद्धमाबद्धचन्द्रानन्दोद्दामोद्दलद्दलपुटाट्टहासविशदं कुमुदषण्डैः ।

## छत्रदर्शनम् ।

चित्रीयमाणचेताश्च सराजको राजा दण्डानुसाराधिरोहिण्या दृष्ट्या सादरमैक्षिष्ट तत्तिलकमिव त्रिभुवनस्य, शैशवमिव श्वेतद्वी-पस्य, अंशावतारमिव शरदिन्दोः, हृदयमिव धर्मस्य, निवेशमिव

---

पौर्णमासीनिशाया। दिनेपि राकेव प्राकाशिष्ट। मन्दं मन्दं शनैः शनैः इन्दोश्चन्द्रस्य उदयस्य संदेहेन शङ्कया दूयमानं मानसं स्वान्तं येषां तैः घटमानायाः दुःखातिशयात् मुद्रयमाणायाश्चञ्च्वास्त्रोटेश्च्युता मृणालकोटिः मृणालखण्डो येषां तैः आसन्नकमलिन्याश्चक्रवाकमिथुनैः रथाङ्गनामकपक्षियुगलैः विघटितं पृथग्भूतम्। चक्रवाका अपि धवलं छत्रं विलोक्य इन्दूदयं शङ्कमाना उद्विग्नमानसाश्चञ्चुगृहीतमपि मृणालशकलम् अर्धजग्धमेव विहाय स्वप्रियाभ्यो वियुक्ता बभूवुः। 'पक्षमूलं तु पक्षतिः', 'स्त्री पक्षतिः पक्षमूले चञ्चुस्त्रोटिरुभे स्त्रियाम्' 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इति सर्वत्रामरः। शरज्जलधरपटलस्य शरत्कालिक-मेघमण्डलस्य शंकया तच्छत्रं सहसोत्थितं शारदजलदकुलम् आशङ्क्य तत्क्षणं संकोचि-तेन केकारवेण केकाध्वनिना मूको मुखपुटो येषां तैर्मूकीभूतैरित्यर्थः भवनशिखण्डि-मण्डलैर्गृहमयूरकुलैः पराङ्मुखीभूतम्। मयूरा यथा प्रावृषि माद्यन्ति न तथा शरदि। कुमुदषण्डैः कुमुदकुलैश्च आबद्धे सन्निहिते चन्द्रे शशिनि आनन्दः प्रीतिस्तेन उद्दामम् उत्कटं यथा स्यात् तथा उद्दलन् विकसन् यो दलपुटः स एव अट्टहासस्तेन विशदं स्फुटं प्रबुद्धम् उन्मीलितम्। 'केका वाणी मयूरस्य'। 'मृणालं विसमब्जादिकदम्बे षण्डमस्त्रियाम्'। 'इन्दीवरं च नीलेऽस्मिन् सिते कुमुदकैरवे' इति सर्वत्रामरः।

चित्रीयमाणं चकितीभवत् चेतो यस्य सः। 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः, 'नमोवरिवश्चित्रङः क्यच्' इति क्यचि शानचि रूपम्। सराजकः सराज-मण्डलो राजा नृपतिर्दण्डानुसारमधिरोहतीति तया, छत्रदण्डादारभ्य उत्तरोत्तरमुपरि विलोकयन्त्या, दृष्ट्या सादरम् सबहुमानम् ऐक्षिष्ट अद्राक्षीत्, त्रैलोक्याद्भुतं महच्छत्रमित्यन्वयः। तस्यैव विशेषणानि—त्रिभुवनस्य त्रिलोक्याः तिलकमिव, शैशवमिव, लघुश्वेतद्वीपमिव।

शशिलोकस्य, दन्तमण्डलधवलं मुखमिव चक्रवर्तित्वस्य, मौक्तिकजालपरिकरसितं सीमन्तचक्रमिव दिवः, बहलज्योत्स्नाशुक्लोदरमैन्दवमिव परिवेशवलयं शौक्ल्यहसितशङ्खश्रीकं श्रवणमण्डलमिव निश्चलतां गतमैरावतस्य श्वेतगङ्गावर्तपाण्डुरं पदमिव त्रिभुवनवन्दनीयं त्रिविक्रमस्य, प्रचेतसश्चूडामणिमरीचिशिखाभिरिव श्लिष्टाभिर्मानसबिसतन्तुमयीभिश्चामरिकावलीभिर्विरचितपरिवेशम्, उपरि चक्रवर्तिलक्ष्मीनूपुरस्वनश्रवणदोहदनिश्चलेनेव लक्ष्मणा विततपत्रेण हंसेन सनाथीकृतशिखरम्, स्पर्शवता च प्रभावस्तम्भि-

---

शरदिन्दोः शरच्चन्द्रस्य अंशावतारमिव, धर्मस्य हृदयमिव, धर्मो हि शुभ्रवर्णः तस्य हृदयमपि सितमेव भवेदिति कवेराशयः। शशिलोकस्य चन्द्रलोकस्य निवेशमिव आवासप्रदेशमिव निविश्यते अस्मिन् इति निवेशः। चक्रवर्त्तित्वस्य सम्राट्त्वस्य मुखम् आरम्भम् इव, दन्तमण्डलेन हस्तिदन्तमयरचनया धवलम्, मुखमपि दन्तमण्डलेन धवलं भवति, हर्षश्चक्रवर्त्ती भविष्यति, तस्योपक्रमोऽनया छत्रप्राप्त्या जात इत्याशयः। मौक्तिकजालानां मुक्तावलीनां परिकरेण सितं धवलं दिवो द्युनायिकायाः सीमन्तचक्रमिव। सीमन्तोऽपि मौक्तिकमालालंकृतो भवति। बहलया सान्द्रया, ज्योत्स्नया शुक्लम् उज्ज्वलम् उदरं मध्यभागो यस्य तत्, ऐन्दवमिव इन्दोरिदं चन्द्रसंबन्धीत्यर्थः, परिवेषवलयमिव परिक्षेपमण्डलमिव। शौक्ल्येन धावल्येन हसिता तिरस्कृता शंखानां कम्बूनां श्रीर्येन तत्, निश्चलतां गतम् स्वाभाविकीमपि चञ्चलतां विहाय स्थिरतां गतम्, ऐरावतस्य इन्द्रगजस्य, श्रवणमण्डलमिव कर्णवलयमिव। त्रिविक्रमस्य विष्णोः, त्रिभुवनेन त्रिलोक्या वन्दनीयं नमस्करणीयम् पदमिव चरणमिव। प्रचेतसो वरुणस्य, श्लिष्टाभिः संगृहीताभिः घनीकृताभिर्वा चूडामणिमरीचिशिखाभिः शिरोरत्नरश्मिशिखाभिः। मानसबिसतन्तुमयीभिः मृणालसूत्रनिर्मिताभिश्चामरिकावलीभिः विरचितो विहितः परिवेषः परिधिर्यस्य तत्। 'परिवेषस्तु परिधिरुपसूर्यकमण्डले' इत्यमरः। उपरिभागे चक्रवर्त्तिनः सम्राजो लक्ष्म्याः श्रियो नूपुराणां हंसकानां स्वनस्य निक्वणस्य श्रवणे योऽभिलाषस्तेन निश्चलेन निभृतेन लक्ष्मणा चिह्नभूतेन, अंकितेनेति यावत्, विततपत्रेण प्रसारितपक्षेण हंसेन सनाथीकृतं युक्तं शिखरं यस्य तत्। हंसा हि नूपुरनिनादप्रियाः प्रसिद्धाः। छत्रोपरिनिर्मितो हंसः सम्राजो राजलक्ष्म्याः नूपुरध्वनिशुश्रूषया इव तत्र विद्यमानः प्रतीयते इति भावः। "दोहदं दौहदं श्रद्धा लालसा"। "नूपुरं तु तुलाकोटिः पादतः कटकाङ्गदे", "मंजीरं हंसकं शिंजनी..." "पत्रं पतत्रं, पिच्छं वाजस्तनूरुहम्। पक्षो

तेन मन्दाकिनीमृणालेन मुकुलितफणेन वासुकिनेव नीतेन दण्डतां द्योतमानम्, धवलिम्ना क्षालयदिव नक्षत्रपथम्, प्रभाप्रवाह-प्रथिम्ना प्रावृण्वदिव दिवसम्, समुच्छ्रायेणाधःकुर्वदिव दिवम्, उपरिस्थितमिव सर्वमङ्गलानाम्, श्वेतमण्डपमिव श्रियः, स्तबकमिव ब्रह्मस्तम्बस्य, नाभिमण्डलमिव ज्योत्स्नायाः, विशदं हासमिव कीर्तेः, फेनराशिमिव खड्गधाराजलानाम्, यशःपटलमिव शौर्यशालितायाः, त्रैलोक्याद्भुतं महच्छत्रम् ।

## अन्योपायनदर्शनम् ।

दृष्टे च तस्मिन्राज्ञा प्रथमे शेषमपि प्राभृतं प्रकाशयांचक्रुः क्रमेण कार्माः । तद्यथा परार्ध्यरत्नांशुशोणीकृतदिग्भागान्, भगदत्त-

---

गरुच्छदश्चापि" इति सर्वत्राभिधानचिन्तामणिः । स्पर्शवता कोमलेन, मुकुलित-फणेन संकुचितफटेन, वासुकिनेव सर्पराजेनेव, दण्डतो नीतेन दण्डस्थाने प्रयुक्तेन । प्रभावेण अलौकिकशक्त्या स्तम्भितेन स्थिरीकृतेन मन्दाकिन्या मृणालेन आकाश-गङ्गायाः कमलिनीनालेन द्योतमानम् । वरुणेन स्वालौकिकशक्त्या स्तम्भितं स्वर्धुन्या मृणालमेव तत्र दण्डस्थाने प्रयुक्तमासीदिति भावः । ईदृशस्य प्रभावस्य वर्णनं रघावपि— 'प्रभावस्तम्भितच्छायमाश्रितः स वनस्पतिम् । कदाचिदङ्के सीतायाः शिश्ये किंचिदिव श्रमात्' । सर्ग १२, श्लोक २१ । धवलिम्ना श्वेतिम्ना, नक्षत्रपथम् अन्तरिक्षमार्गं क्षालयदिव स्नपयद् इव । प्रभायाः कान्त्याः प्रवाहस्य प्रथिम्ना वैपुल्येन दिवसं प्रावृण्वद् आच्छादयदिव । समुच्छ्रायेण औन्नत्येन दिवं द्युलोकम् अधःकुर्वदिव, तिरस्कुर्वदिव, सर्वमाङ्गलिकपदार्थानां उपरिस्थितमिव प्रमुखमिव । श्रियः कमलायाः, श्वेतमण्डपमिव शुभ्रमण्डपमिव । ब्रह्मस्तम्बस्य ब्रह्मरूपस्य स्तम्बस्य गुल्मस्य, स्तबकमिव पुष्पगुच्छमिव । 'प्रकाण्डरहिते स्तम्बो विटपो गुल्म' इत्यभिधानचिन्तामणिः । ज्योत्स्नायाः कौमुद्याः नाभिमण्डलमिव केन्द्रमिव । कीर्त्तेर्यशसो विशदम् उज्ज्वलं हासमिव खड्गधाराजलानां खड्गस्य असेः धारा एव धाराः प्रवाहास्तेषां जलानाम्, फेनराशिमिव । शौर्यशालिवीरतायाः यशःपटलमिव कीर्तिकलापमिव । त्रिलोक्याम्, अद्भुतं विचित्रम् छत्रं राजा सादरमैक्षिष्ट ।

राज्ञा नृपेण च तस्मिन् आतपत्रे अवलोकिते सति कार्माः भृतकाः शेषमपि छत्रातिरिक्तमपि प्राभृतम् उपहारं प्रकाशयांचक्रुः । 'स कार्मः कर्मशीलो यः' इत्यमरः । शेषं प्राभृतं वर्णयति कविः । तद्यथा परार्ध्याणां श्रेष्ठानां महामूल्यवतां रत्नानाम् अंशुभिः किरणैः शोणीकृता रक्तवर्णीकृताः 'परार्ध्याऽग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्' इत्यमरः

प्रभृतिख्यातपार्थिवपरागतानाहतलक्षणानलंकारान्, प्रभालेपिनां च चूडामणीनां समुत्कर्षान्, क्षीरोदधेर्धवलताहेतूनिव हारान्, अनेकरागरुचिरवेत्रकरण्डकुण्डलीकृतानि शरच्चन्द्रमरीचिरुञ्चि शौचक्षमाणि क्षौमाणि कुशलशिल्पिलोकोल्लिखितानां च शुक्तिशङ्खगल्वर्कप्रमुखानां पानभाजनानां निचयान्, निचोलकरक्षितरुचां च रुचिरकाञ्चनपत्रभङ्गभङ्गुराणामतिवन्धुरपरिवेशानां कार्दरङ्गचर्मणां संभारान्, भूर्जत्वक्कोमलाः स्पर्शवतीः जातिपट्टिकाः चित्रपटानां च म्रदीयसां समूरुकोपधानादीन्विकारान्, प्रियङ्गुप्रसवपिङ्गलत्वञ्चि

---

दिशां विभागाः यैः। 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः। भगदत्तप्रभृतिभ्यः ख्यातेभ्यः प्रसिद्धेभ्यः पार्थिवेभ्यो भूपतिभ्यः, परागतान् पराक् आगतान् उत्तरोत्तरमागतान् आहतलक्षणान् गुणैः प्रसिद्धान्। 'गुणैः प्रतीते तु कृतालक्षणाऽऽहतलक्षणौ' इत्यमरः। अलंकारान् आभरणानि। प्रभया कान्त्या विभान्तीति तेषां चूडामणीनां शिरोरत्नानां, समुत्कर्षान् अतिशयान्, असाधारणान् चूडामणीन् इत्याशयः। क्षीरोदधेः दुग्धसिन्धोर्धवलताहेतूनिव हारान् येषां श्वेतिमवशादेव क्षीरोदधिरपि धवलः प्रतीयते इति भावः। वस्तुतः क्षीरोदधौ धवलता स्वाभाविकी, हारेषु तत्कारणतासंभावनावर्णनाद् उत्प्रेक्षालंकारः। अनेकैर्विविधैः रागैर्वर्णैः, रुचिरेषु मनोज्ञेषु, वेत्रमयेषु करण्डेषु भाजनेषु, कुण्डलीकृतानि वलयीकृतानि अवभज्य स्थापितानि, शरच्चन्द्रमरीचिवद् रुक् कान्तिर्येषां तानि, शौचक्षमाणि प्रक्षालनयोग्यानि नातिभङ्गुराणीत्यर्थः। क्षौमाणि दूकूलवस्त्राणि। कुशलैः पटुभिः शिल्पिलोकैश्चतुरकारुभिः उल्लिखितानाम् उत्कीर्णानाम्, शुक्तयः मुक्तास्फोटाः, शङ्खाः कम्बवः गल्वर्का भसाराख्या मणयस्तत्प्रमुखानां तन्निर्मितानां पानभाजनानां पानसाधनपात्राणां निचयान् राशीन्। निचोलकैः प्रसेवकै रक्षिता रुचो येषां, रुचिरैः कमनीयैः काञ्चनपत्रभङ्गैः स्वर्णमयपत्रपुष्पादिरचनाभेदैः भङ्गुराणां चित्रितानाम्, अतिवन्धुरः शोभनः परिवेषो परिधिर्येषाम्। 'चारु हारि रुचिरं मनोहरं वल्गु कान्तमभिरामबन्धुरे। वामरुच्यसुषमाणि शोभनं मञ्जुमञ्जुलमनोरमाणि च' इत्यभिधानचिन्तामणिः। तेषां कार्दरङ्गदेशभवानां चर्मणां खेटकानां संभारान् निचयान्। 'अङ्कनं फलकं चर्म खेटकाऽऽवरणस्फुराः' इति अभिधानचिन्तामणिः। 'ढाल' इति भाषायाम्। भूर्जत्वक्वत् कोमला स्पर्शवतीः सुस्पर्शाः, मसृणा इत्यर्थः, जातिपट्टिकाः श्रेष्ठजातियुक्ताः पट्टिकाः जघनग्रन्थनानि जघनसूत्राणि वा। 'नाडे' इति भाषायाम्। अथवा जातिकुसुमसुवासिताः पट्टिका इति। म्रदीयसाम् अतिमृदूनां

**चासनानि वेत्रमयान्यगुरुवल्कलकल्पितसंचयानि च सुभाषितभाञ्जि पुस्तकानि, परिणतपाटलपटोलत्विषि च तरुणहारीतहरिन्ति क्षीरक्षारीणि च पूगानां पल्लवलम्बीनि सरसानि फलानि, सहकारलतारसानां च कृष्णागुरुतैलस्य च कुपितकपिकपोलकपिलकापोतिकापलाशकोशीकवचिताङ्गीः स्थवीयसीर्वैणवीर्नाडीश्च पट्टसूत्रप्रसेवकार्पितांश्च भिन्नाञ्जनकृष्णस्य कृष्णागुरुणः गुरुपरितापमुषश्च**

---

चित्रपटानाम् अद्भुतवस्त्रालंकृतानां समूरुकोपधानादीन् चमूरुमृगचर्मनिर्मितान् उपधानादीन् उपबर्हप्रभृतीन् विकारान् भेदान्। 'तकिया' 'गद्दा' इति भाषायाम्। 'मृगभेदा रुरुन्यङ्कुरङ्कुगोकर्णशंबराः। चमूरुचीनचमराः समूरैणर्श्यरौहिषाः। कदली कदली कृष्णशारः पृषतरोहितौ। इति अभिधानचिन्तामणिः। उपधानं तूपबर्हः। इत्यमरः। प्रियङ्गुप्रसववत्पिङ्गला रक्तपीतास्त्वचो येषां तानि वेत्रमयानि वेतसरचितानि आसनानि आसन्द्यः। 'स्याद्वेत्रासनमासन्दी' इत्यभिधानचिन्तामणिः। 'प्रियङ्गुः फलिनी फली' इत्यमरः। 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः। अगुरुवल्कलेन अगुरुवृक्षत्वचा कल्पितो रचितः संचयः संपुटबन्धो येषां (जिल्द, बस्ता इति भाषायाम्) तानि सुभाषितभाञ्जि सुभाषितयुक्तानि पुस्तकानि सुभाषितग्रन्थाः। सुभाषितानि भजते इति सुभाषितभाक् तस्य क्लीबे बहुत्वे च सुभाषितभाञ्जि। 'भजो ण्विः' इति ण्विप्रत्ययः। परिणतस्य परिपक्वस्य पाटलस्य श्वेतरक्तवर्णस्य पटोलस्य तदाख्यशाकविशेषस्य त्विड् इव कान्तिरिव त्विट् येषां तानि श्वेतरक्तानि, सर्वथा आमानि तु तरुणहारीतवत् हरितवर्णानि च क्षीरं दुग्धं क्षरन्ति स्रावयन्तीति तानि, पल्लवेषु लम्बन्ते इति पल्लवलम्बीनि सरसानि आर्द्राणि पूगानां क्रमुकाणां फलानि। सर्वथा नवानि फलानि हरितानि ईषत्पक्वानि च पाटलानि इति ज्ञेयम् अन्यथा तेषामेव पक्वपटोलवत् पाटलत्वं तरुणहारीतवद्धरितवर्णत्वं च नोपपद्यते। सहकारलतारसानां रसालवल्लरीरसानां कृष्णागुरुणस्तैलस्य च स्थवीयसीः स्थूलाः वैणवीर्वैणुमयीर्नाडीः भाजनानीत्यर्थः। स्थूलानि वंशपर्वाणि निकृत्य पात्ररूपेण प्रयुज्यन्ते। 'क्ष्वेडा वंशशलाकाऽपि नाडी कालेपि षट्क्षणे' इत्यमरः। ता नाडीर्विशिनष्टि—कुपितस्य क्रुद्धस्य कपेर्वानरस्य कपोलवत्कपिलानि यानि कपोतिकायाः तदाख्यलतायाः पलाशानि पर्णानि तेषां कोशीभिः संपुटैः कवचिताङ्गीर्वेष्टिता इत्यर्थः। 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः। पट्टसूत्राणां कौशेयसूत्राणां ये प्रसेवकाः पोटलिकाः तत्रार्पितान् तत्र निहितान् भिन्नाञ्जनवत् घृष्टकज्जलवत्कृष्णस्य। 'अञ्जनं कज्जलम्' इत्यभिधानचिन्तामणिः।

गोशीर्षचन्दनस्य, तुषारशिलाशकलशिशिरस्वच्छसितस्य च कर्पूरस्य, कस्तूरिकाकोशकानां च पक्वफलजूटजटिलानां च कक्कोलपल्लवानाम्, लवङ्गपुष्पमञ्जरीणां जातीफलस्तबकानां च राशीन्, अतिमधुरमधुरसामोदनिर्हारिणीश्चोल्लककलशीः सितासितस्य च चामरजातस्य निचयान्, अवलम्बमानतूलिकालाबुकांश्च लिखितानालेख्यफलकसंपुटान्, कुतूहलकृन्ति कनकशृङ्खलानियमितग्रीवाणां किंनराणां च वनमानुषाणां च जीवञ्जीवकानां च जलमानुषाणां च मिथुनानि, परिमलामोदितककुभश्च कस्तूरिकाकुरङ्गान्, गेहपरिसरणपरिचिताश्च चमरीः, चामीकररसचित्रवेत्रपञ्जरान्तर्गतांश्च सबहुसुभाषितजल्पाकजिह्वांश्च शुकशारिका-

---

कृष्णागुरुणः काकतुण्डस्य। 'कालागुरुः काकतुण्डः' इत्यभिधानचिन्तामणिः। गुरुं परितापं मुष्णाति हरतीति तस्य गोशीर्षाख्यचन्दनभेदस्य, तुषारशिलाशकलवत् तुहिनखण्डवच्छिशिरस्य शीतलस्य, स्वच्छस्य निर्मलस्य सितस्य श्वेतस्य च कर्पूरस्य हिमवालुकायाः। 'कर्पूरो हिमवालुका' इत्यभिधानचिन्तामणिः। कस्तूरिकायाः मृगमदस्य कोशकानां नाभीनाम्। 'मृगनाभिर्मृगमदः कस्तूरी गन्धधूल्यपि' इत्यभिधानचिन्तामणिः। पक्वैः परिणतैः फलजूटैः फलसमूहैर्जटिलानां कक्कोलपल्लवानां कोशफलकिसलयानाम्। 'अथ कोलकम्। कक्कोलकं कोशफलम्' इत्यभिधानचिन्तामणिः। 'लवङ्गपुष्पमञ्जरीणाम्। लवङ्गं देवकुसुमं श्रीसंज्ञम्' इत्यभिधानचिन्तामणिः। जातीफलस्तबकानां च जातिकोशगुच्छकानां च। 'जातिकोशो जातिफलम्' इति अभि० चिन्ता०। राशीन् विकरान्। अवलम्बमानाः तूलिकाः अलाबुकाश्च येषु तान् लिखितान् चित्रितान्, आलेख्यफलकसंपुटान् चित्रपटपटलसमुद्गकान्। 'समुद्गकः संपुटकः' इत्यमरः। कुतूहलं कुर्वन्तीति तानि कुतूहलकृन्ति कौतुककारकाणि, कनकशृंखलाभिः काञ्चननिगडैर्नियमिता बद्धा ग्रीवा येषां तेषाम्, किन्नराणां किंपुरुषाणाम्, वनमानुषाणाम्, जीवञ्जीवकानां चकोरभेदानाम्, जलमानुषाणां च मिथुनानि युगलानि। 'जीवंजीवश्चकोरकः' इत्यमरः। 'स्यात्किंनरः किंपुरुषः' इत्यमरः। स्वपरिमलेन सौरभेण आमोदिताः ककुभो यैस्तान् कस्तूरिकाकुरंगकान् कस्तूरीमृगान्। गेहे भवने परिसरणं परिचरणं तेन हेतुना परिचिताः संजातपरिचयाः चमरीः चामीकररसेन सुवर्णद्रवेण अद्भुताकारचित्राणाम् वेत्रपञ्जराणाम् अन्तर्गतान्, सुबहूनां प्रचुराणाम्, सुभाषितानां सूक्तीनां, जल्पाका जल्पनशीला जिह्वा रसना, येषां तान्। शुकशारिकाप्रभृतीन् कीरसारिकादीन्

प्रभृतीन्पक्षिणः, प्रवालपञ्जरगतांश्च चकोरान्, जलहस्तिनामुदग्र-कुम्भमुक्ताफलदामदन्तुराणि च दन्तकाण्डकुण्डलानि ।

## हंसवेगस्य विश्रमाय विसर्जनम् ।

राजा तु छत्रदर्शनात्प्रहृष्टहृदयः प्रथमप्रयाणे शोभननिमित्त-मिति मनसा जग्राह । हंसवेगं च प्रीयमाणो बभाषे—'भद्र, सकलरत्नधाम्नः परमेश्वरशिरोधारणार्हस्यास्य महातपत्रस्य महार्णवा-दिव कुमुदबान्धवस्य कुमाराल्लाभो न विस्मयाय । बालविद्याः खलु महतामुपकृतयः' इति । अपनीते च तस्मात्प्रदेशात्प्राभृतसंभारे क्षणमिव स्थित्वा 'हंसवेग, विश्रम्यताम्' इति प्रतीहारभवनं विस-र्जयांबभूव । स्वयमप्युत्थाय स्नात्वा मङ्गलाकाङ्क्षी प्राङ्मुखः प्रावि-शदाभोगस्य छायाम् ।

---

पतत्रिणः, प्रवालपञ्जरगतान् विद्रुमपञ्जरनिरुद्धान् चकोरान् जलहस्तिनां उदग्रकुम्भात् उत्कटकटात् निःसृतानां मुक्ताफलानां दामभिर्मालाभिर्दन्तुराणि जटितानि गजदन्त-काण्डस्य कुण्डलानि इतीतरोपायनानि प्रकाशयांचक्रुः ।

राजा तु छत्रदर्शनात् प्रहृष्टं हृदयं यस्य स प्रसन्नमनाः । प्रथमप्रयाणे प्रथमविजययात्रायां शोभनं निमित्तं मङ्गलं शकुनमिति मनसा बुद्ध्या विचार्येति भावः । तत् जग्राह अङ्गीचकार । छत्रस्वीकरणानन्तरं हंसवेगं प्रीयमाणः प्रसन्नः हर्षो बभाषे । भद्र, सकलानां समग्राणां रत्नानां धाम्नो गृहात्, महार्णवात् महासाग-रात्, इव, सकलरत्नधाम्नः कुमारात् कामरूपाधीश्वरात्, कुमुदबान्धवस्येव चन्द्रमस इव परमेश्वरेण नृपतिना शिरसि धारणार्हस्य धारणयोग्यस्य, अस्य महातपत्रस्य लाभो न विस्मयाय न आश्चर्याय । चन्द्रो हि परमेश्वरेण शिवेन शिरसि धार्यते इति छत्रचन्द्रमसोः सादृश्यम् । 'धाम रश्मौ गृहे स्थाने जन्मप्रभावयोः' इत्यमरः । उपकृतयः उपकाराः खलु महतां बालविद्याः बाल्यकालशिक्षिताः विद्या इव इति । अथ तस्मात् प्रदेशात् प्राभृतसंभारे उपायननिवहे, अपनीते अपसारिते सति, क्षणं मुहूर्तं स्थित्वा मुहूर्तं विरम्य हर्षः 'हंसवेग विश्रम्यताम्' विश्रामं कुरु इत्युक्त्वा तं प्रतीहारभवनं प्रति विसर्जयांबभूव । स्वयमपि उत्थाय स्नात्वा मङ्गलाकाङ्क्षी मङ्गलाभिलाषी प्राङ्मुखः पूर्वाभिमुखो भूत्वा आभोगस्य तन्नाम्नश्छत्रस्य छायां प्राविशत् ।

## विश्रामभोजनादि

अथ विशत एवास्य छायाजन्मना जडिम्ना चूडामणितामनीयतेव शशिबिम्बमम्बुबिन्दुमुचश्चुचुम्बुरिव चन्द्रकान्तमणयो ललाटतटं कर्पूररेणव इव व्यलीयन्त लोचनयुगले गलत्तुहिनकणनिकरकृतनीहारा हारा इवाबध्यन्त हरिचन्दनरसासारेणेवापाति संततमुरसि कुमुदमयमिव हृदयमभवदतिशिशिरमन्तर्हितहिमशिलेव विलीयमाना व्यलिम्पदङ्गानि। जातविस्मयश्चाकरोन्मनसि एकमजर्यं संगतमपहाय कास्त्यन्या प्रतिकौशलिकेति। आहारकाले च हंसवेगाय धवलकर्पटप्रावृतधौतनालिकेरपरिगृहीतं विलिप्तशेषं चन्दनमङ्गस्पृष्टे च वाससी शरत्तारकाकारतारमुक्तास्तवकितपदं

---

अथ छत्रच्छायाप्रवेशानन्तरम् एव छायाया जन्म यस्य तेन छायाजन्येन जडिम्ना शैत्येन, शशिबिम्बं चन्द्रमण्डलं चूडामणितामिवानीयत। स्वयं चन्द्रमण्डलमेव तस्य चूडामणितामभजतेति श्रीहर्षेणान्वभावि। जडस्य भावो जडिमा। जडशब्दादिमनिच् प्रत्ययः पुंसि। अम्बुनो जलस्य बिन्दून् मुञ्चन्तीति श्चोतन्तीति ते चन्द्रकान्तमणयः तस्य ललाटतटं भालतलं चुचुम्बुरिव पस्पृशुरिव। चन्द्रकान्तमणयो हि चन्द्रमरीचिसंस्पृष्टा अच्छाच्छा जलधाराः स्रवन्तीति प्रसिद्धिः। लोचनयुगले नयनद्वये कर्पूरस्य रेणवः कणाः व्यलीयन्त विलीनाः इवेत्युत्प्रेक्षायाम्। गलद्भिः क्षरद्भिस्तुहिनणनिकरैस्तुषारक्षोदराशिभिः कृतो विहितो नीहारो अवश्यायःयैस्ते-हारा इव मौक्तिकसारा इव अबध्यन्त ग्रीवायामिति शेषः। उरसि वक्षसि सततम् अजस्रं हरिचन्दनरसस्य आसारेणेव धारासंपातेन इव, ( कर्तरि तृतीया ) अपाति अच्यावि। भावे लुङ्। हृदयं हृदयप्रदेशोपि कुमुदमयमिव कैरवमयमिव अतिशिशिरं नितरां शीतलम् अभवत्। अन्तर्हिता प्रच्छन्ना विलीयमाना च शनैः शनैः गलन्ती, 'पिछलती हुई' इति भाषायाम्। हिमशिलेव अस्य अङ्गानि अवयवान् व्यलिम्पत्। 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्। 'शिशिरो जडः। तुषारः शीतलः शीतो हिमः' 'पंचैते देवतरवो मन्दारः पारिजातकः। संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्'। इति सर्वत्रामरः। जातविस्मयश्च चित्रीयमाणचेताश्च, अकरोन्मनसि व्यचारयत्, एकम् अनुपमम् अजर्यं स्थायि, संगतं सख्यमपहाय उज्झित्वा का अन्या प्रतिकौशलिका प्रतिप्राभृतं ( भेंट ) कुमाराय प्रेषयितुं तस्य पार्श्वे अस्तीति। आहारकाले च भोजनवेलायां च, हंसवेगाय धवलेन कर्पटेन प्रावृते वेष्टिते नालिकेरे नारिकेलसमुद्गके परिगृहीतं न्यस्तं विलिप्तात् शेषं स्वाङ्गे विलिप्य ततोऽवशिष्टं चन्दनं मलयजम्, अङ्गेन स्वगात्रेण स्पृष्टे वाससी दुकूले, शरत्तारकाकारैः शरन्नक्षत्रनिर्मलैस्तारैः

परिवेशं नाम कटिसूत्रमतिमहार्हपद्मरागालोकलोहितीकृतदिवसं च तरङ्गकं नाम कर्णाभरणं प्रभूतं च भोज्यजातं प्राहिणोत्। एवंप्रायेण च क्रमेण जगाम दिवसः।

## संध्यासमयः।

ततः कटकस्थबलबहलधूलिधूसरितवपुरंशुमाली मलीमसमङ्गमिव क्षालयितुमपरजलनिधिमवातरत्। आभोगातपत्रप्रदानवार्तामिव निवेदयितुं वरुणाय वारुणीं दिशमयासीत्। मुकुलायमानसकलकमलवना प्रमुख एव बद्धसेवाञ्जलिपुटेव सद्वीपा भूरभूद्भूपतेः। नृपानुरागमय इव निखिलजीवलोकलोकाञ्जलिबन्धबन्धुर्जगज्जग्राह संध्यारागः। गौडापराधशङ्किनीव श्यामतां प्रपेदे दिक्प्राची। प्रचिततिमिरनिवहा निर्वाणान्यनृपप्रतापानलकलापेव

---

उज्ज्वलैः मुक्तास्तबकैर्युक्तं परिवेशं नाम कटिसूत्रं मेखलाम्। 'कटिसूत्रं तु मेखला' इति अभिधानचिन्तामणिः। अतिमहार्हस्य महामूल्यस्य पद्मरागस्य रक्तवर्णरत्नविशेषस्य आलोकेन प्रभया लोहितीकृतोऽरुणवर्णीकृतो दिवसो येन तत् तरङ्गकं नाम कर्णाभरणम् अवतंसम्, प्रभूतं प्रचुरं भोज्यजातं भोजनसंभारं च प्राहिणोत् प्रैषयत्।

अथ कटकस्थस्य स्कन्धावारवर्त्तिनः बलस्य सैन्यस्य, बहलया सान्द्रया धूल्या रजोराशिना धूसरितं मलिनं वपुर्मण्डलं यस्य सोंऽशुमाली सूर्यः मलीमसं मलिनम्, अंगम्, क्षालयितुं मार्ष्टुम्, ( इवेत्युत्प्रेक्षायाम् ) अपरजलनिधिं पश्चिमसमुद्रमवातरत्। आभोगातपत्रस्य प्रदानवार्त्तां कुमारद्वारा हर्षाय प्रदानस्य समाचारं वरुणाय तच्छत्रस्य पूर्वस्वामिने प्रचेतसे निवेदयितुमिव श्रावयितुमिव वारुणीम् वरुणस्वामिकाम् पश्चिमाम्, दिशम्, अयासीत् अगच्छत्। मुकुलायमानानि निमीलन्ति, सकलानि कमलानां वनानि पद्मकाननानि यस्यां सा, सद्वीपा, भूः प्रमुखे एव सम्मुखे एव बद्धः सेवार्थमञ्जलिपुटो यया सेवांऽभवत्। मुकुलितेषु कमलकुलेषु बद्धाञ्जलित्वसंभावनादुत्प्रेक्षालंकारः। निखिलस्य समस्तस्य जीवलोकस्य भुवनस्य ये लोका जनास्तेषामञ्जलिबन्धेन बन्धुरो मनोज्ञः। अत्र मूले 'बन्धुरो' इति पाठोऽपेक्षितः, परं निर्णयसागरसंस्करणे उपरि लिखित एव पाठः। सन्ध्यारागः प्रदोषारुणिमा नृपानुरागमय इव जगत् विश्वं जग्राह। यथा हर्षमभिलक्ष्य जनानुरागस्तथा सन्ध्यारागोऽपि विश्वम् आत्मसाच्चकार। गौडस्य शशाङ्कस्य अपराधेन राज्यवर्धनवधजन्येन शङ्किनीव संजातशङ्केव प्राची दिक् श्यामतां मलिनतां प्रपेदे। भयेन हि मुखे मलिनता जायते। प्रचितः पुञ्जितस्तिमिरस्य ध्वान्तस्य निवहः समूहो यस्यां सा मेदिनी वसुधा निर्वाणः प्रशान्तोऽन्येषां हर्षातिरिक्तानां नृपाणां राज्ञां प्रतापानलकलापो यस्यां तथाविधेव

कालिमानमतानीन्मेदिनी । मेदिनीशप्रदोषास्थानपुष्पनिकरमिव विकचतगररुचिरमवचकरुरुडुनिकरमविरलं ककुभः। स्कन्धावार-गन्धगजमदामोदधावितस्येव मार्गो वियति विरराज रजःपाण्डु-रैरावतस्य । कुपितनृपव्याघ्राघ्रातामुपसृष्टामिव पौरुष्टुतीं विहाय विहायस्तलमारुरोह रोहिणीरमणः । प्रयाणवार्ता इव मानिनीनां हृदयभेदिन्यो ययुरिन्दुदीधितयो दश दिशः । नवनृप-दण्डयात्रात्रासातुरा इव तरलितसत्त्ववृत्तयश्चुक्षुभुः पतयो वाहि-नीनाम् । चिन्तेव भूभृतां हृदयानि विवेश गुहाविवराणि विमु-

---

कालिमानं श्यामलताम्, अतानीत् अतनोत् । मेदिनीशस्य भूपतेः प्रदोष-वेलायां यदाऽऽस्थानं सभोपवेशनस्थानम्, तत्र विकिरणार्थं पुष्पनिकरं कुसुम-निचयमिव, विकचतगररुचिरं विकसिततगरकुसुमकमनीयम्, अविरलं सान्द्रम् उडु-निकरं तारकासमूहम् अवचकरुर्निचिक्षिपुः ककुभो दिशः । दिक्षु विकीर्णेषु नक्षत्र-समूहेषु पुष्पप्रचयसंभावनादुत्प्रेक्षा । वियति गगने छायापथः स्कन्धावारस्य कटकस्य ये गन्धगजास्तेषां मदामोदेन दानसौरभेण धावितस्य पलायितस्य ऐरावतस्य इन्द्रकरिणो रजःपाण्डुः पवन-वेगवशाद् ऐरावतशरीरादुत्क्षिप्तया धूल्या धवलितो मार्ग इव विरराज शुशुभे । 'स्वेदे मूत्रं पुरीषं च मज्जां चैव मतङ्गजाः । यस्याघ्राय विमाद्यन्ति तं विद्याद्गन्धहस्तिनम् ।' इति । कुपितः क्रुद्धो यो नृपः स एव व्याघ्रस्तेन घ्रातां युक्तामित्यर्थः, अतएव उपसृष्टां सोपद्रवाम् इव पौरुहूतीं दिशम् ऐन्द्रीं दिशं विहाय त्यक्त्वा रोहिणीरमणश्चन्द्रो विहायस्तलं नभस्तलमारुरोह । व्याघ्रेण सिंहेन युक्तां गावं विहाय रोहिणीरमणो वृषभो यथा अन्यां दिशं श्रयति तथा नृपो व्याघ्र इवेति नृपव्याघ्रो हर्षस्तेनेवाश्रितां पूर्वदिशं विहाय चन्द्रो गगनमारुरोह । 'पौरुष्टुतीं' इति पाठे पुरुष्टुत् इन्द्रस्तस्येमां पौरुष्टुतीम् । नृपव्याघ्रो नृपश्रेष्ठः । व्याघ्रादयः शब्दा उत्तरपदे वर्तमानाः श्रेष्ठार्थका भवन्ति । तदुक्तममरसिंहेन 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुंजराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ।' 'माहेयी सौर-भेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी' इत्यमरः । मानिनीनां प्रियेषु प्रणय-कोपवतीनां कामिनीनां कृते प्रयाणवार्ता इव पत्युः प्रवासचर्चा इव हृदय-भेदिन्य इन्दुदीधितयश्चन्द्ररश्मयो दश दिशो ययुः । नवस्य नूतनस्य नृपस्य राज्ञो दण्डयात्रात्रासेन सैन्ययात्राभयेन आतुरा इव तरलिताः द्रुताः कातरा इत्यर्थः, सत्त्व-वृत्तयश्चित्तवृत्तयो येषां ते वाहिनीनां सेनानां पतयो राजानश्चुक्षुभुः विचलिता बभूवुः । पक्षे तरलितानां चञ्चलानां सत्त्वानां प्राणिनां वृत्तयो येषु ते वाहिनीनां नदीनां पतयः समुद्राः तेऽपि नृपयात्रासंरम्भेण चकम्पिरे । विमुक्ता परिहृता सर्वा

क्तसर्वोर्वी तिमिरसंततिः। प्रतिसामन्तचक्षुषामिव ननाश निद्रा कुमुदवनानाम्।

## कुमारस्य वंशादिपरिचयः।

अस्यां च वेलायां विततवितानतलवर्ती नरेन्द्रो 'यात तावत्' इति विसर्ज्यानुजीविनो हंसवेगमादिष्टवान्—'कथय संदेशम्' इति। प्रणम्य स कथयितुं प्रास्तावीत्—'देव, पुरा महावराहसंपर्कसंभूतगर्भया भगवत्या भुवा नरको नाम सूनुरसावि रसातले। वीरस्य यस्याभवन्बाल्य एव पादप्रणामप्रणयिनश्चूडामणयो लोकपालानाम्। यस्य च त्रिभुवनभुजो भुजशौण्डस्य भवनकमलिनीचक्रवाकीकोपकुटिलकटाक्षेक्षितोऽपि भयचकितारुणपरिवर्तितरथो नाज्ञया विना रविरस्तमव्राजीत्। यश्च वरुणस्य बहिर्वृत्ति हृदय-

---

उर्वी यया सा, तिमिरसन्ततिः ध्वान्तसंहतिर्गुहाविवराणि कन्दराविलानि, भूभृतां भूपतीनाम्, हृदयानि चिन्तेव विवेश। विमुक्तसर्वाशा इति पाठे विमुक्ता सर्वा आशा आस्था यया तथाभूता चिन्ता, तिमिरपक्षे आशाः दिशः प्रतिसामन्तचक्षुषाम् प्रत्यर्थिभूपतीनाम् इव कुमुदवनानां कैरवकुलानाम् अपि, निद्रा सुप्तिः मुकुलीभावश्च ननाश।

अस्यां च वेलायां विततस्य विस्तृतस्य, वितानस्य उल्लोचस्य तले वर्तते इति सः, नरेन्द्रो 'हर्षः' 'यात तावत्' 'गच्छत तावत्' इत्यनुजीविनोऽनुयायिनः परिजनान्, विसर्ज्य, हंसवेगम् आदिष्टवान् 'कथय संदेशम्' इति। स प्रणम्य नमस्कृत्य, कथयितुं वक्तुं प्रास्तावीत् उपचक्रमे। देव! पुरा विष्णोरवतारभूतस्य वराहस्य संपर्केण संसर्गेण समागमनेनेति यावत्, संभूतगर्भया अन्तर्वत्न्या भगवत्या भुवा मेदिन्या, नरको नाम नरकाख्यः सूनुस्तनयो रसातले पाताले असावि जनितः। यस्य वीरस्य (सम्मुखे) बाल्ये एव लोकपालानाम् इन्द्रवरुणादिदिक्पालानाम् अथवा नृपाणाम् चूडामणयः पादयोः चरणयोः प्रणामे नमस्करणे प्रणयिन इच्छुकाः अभवन्। यस्य च त्रिभुवनभुजः त्रिलोकीस्वामिनः, भुजाभ्यां शौण्डस्य बाहुबलमत्तस्य 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः। आज्ञया विना भवनकमलिनीनां गृहपुष्करिणीनां याश्चक्रवाक्यो रथाङ्गवल्लभास्तासां कोपकुटिलैः क्रोधवक्रैः कटाक्षैः तिर्यगवलोकितैरीक्षितोऽपो दृष्टोपि निशि विरहकातराभिस्ताभिरपगच्छन् सूर्यः सरोषं निरीक्ष्यते गमननिषेधार्थम्। तादृशोऽपि भयचकितेन त्रस्तेन अरुणेन तन्नाम्ना सूर्यसारथिना अनूरुणा परिवर्तितो रथो यस्य स भानुरस्तम् अस्ताचलं न अव्राजीत् जगाम। सूर्योपि यदाज्ञावर्ती अवर्तिष्टेत्याशयः। यश्च वरुणस्य प्रचेतसः बहिर्वृत्ति शरीराद् बहिर्विद्यमानं साक्षात् जीवितं जीवनमिवेति

मिदमातपत्रमहार्षीत्। महात्मनस्तस्यान्वये भगदत्तपुष्पदत्तवज्रदत्तप्रभृतिषु व्यतीतेषु बहुषु मेरूपमेषु महत्सु महीपालेषु प्रपौत्रो महाराजभूतिवर्मणः पौत्रश्चन्द्रमुखवर्मणः पुत्रो देवस्य कैलासस्थिरस्थितेः स्थितिवर्मणः सुस्थिरवर्मा नाम महाराजाधिराजो जज्ञे तेजसां राशिर्मृगाङ्क इति यं जना जगुः। योऽयमजेनेवाजायत सहैवाहंकारेण। यश्च बाल एव प्रीत्या द्विजातीनप्रीत्या चारातीन्समग्रान्प्रतिग्रहानग्राहयत्। यत्र चातिदुर्लभं लवणालयसंभूतायाः परं माधुर्यमभूल्लक्ष्म्याः। तथा च यो वाहिनीनाथानां शङ्खान्जहार न रत्नानि, पृथिव्याः स्थैर्यं जग्राह न करम्, अवनिभृतां गौरवमादत्त न नैष्ठुर्यम्। तस्य च सुगृहीतनाम्नो देवस्य देव्यां श्यामादेव्यां

---

भावः। छत्रे बहिर्वृत्तिजीवितारोपात् अधिकारूढवैशिष्ट्यं रूपकम्। अस्य महात्मनो नरकस्य अन्वये कुले भगवद्दत्तपुष्पदत्तवज्रदत्तप्रभृतिषु बहुषु अनेकेषु मेरुरूपेषु महिम्ना ऐश्वर्यातिशयेन मेरुसदृशेषु अथवा सुवर्णवर्णशरीरेषु महत्सु महीपालेषु व्यतीतेषु, महाराजभूतिवर्मणः प्रपौत्रः, चन्द्रमुखवर्मणः पौत्रः, देवस्य कैलासे शिवलोके स्वर्ग इत्यर्थः, स्थिरा अचला स्थितिर्निवासो यस्य तस्य, नाम्ना स्थितिवर्मणः पुत्रः सूनुः सुस्थिरवर्मा नाम तेजसां प्रतापानां राशिः पुञ्जो महाराजाधिराजः सम्राट् जज्ञे। यं जनाः 'मृगाङ्क' इति जगुः। यो जनैः मृगाङ्क इति नाम्ना व्यवाह्रियत। योऽयमजेनेव युग्मजातेन इव जन्मकाले सहैवोत्पन्नेन अहंकारेण अभिमानेन सममेव अजायत। यश्च बाल एव प्रथमवयसि वर्तमान एव द्विजातीन् ब्राह्मणान् प्रीत्या प्रेम्णा प्रतिग्रहान् देयद्रव्याणि अग्राहयत्। किं च अप्रीत्या वैरेण, अरातीन् शत्रून्, प्रतिग्रहान् सैन्यपश्चाद्भागान् अग्राहयत्। तद्भयेन शत्रवः सैन्यपृष्ठभागे प्रच्छन्ना बभूवुः। 'प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे। द्विजेभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे' इति मेदिनी। यत्र च यमभिलक्ष्य च अतिदुर्लभं नृपान्तरैः क्लेशलभ्यं लवणालयसंभूतायाः क्षारसागरोत्पन्नाया अपि लक्ष्म्या माधुर्यमभूत् मधुरभावो हृदयस्य बभूव। लक्ष्मीः यस्मिन् स्वयमनुरक्तासीत्। यो वहिनीनाथानां राज्ञां समुद्राणां च शङ्खान् विजयघोषकारिणः कम्बून् जहार न करम् बलिम्। पृथिव्याः मेदिन्याः स्थैर्यं स्थिरतां जग्राह आदत्त न करं शुल्कम्। पृथिव्याः सकाशात् स्थैर्यगुणं तु स्वीचकार प्रजाजनेभ्यः पीडाकरान् करान् न जग्राह। अवनिभृतां राज्ञां गिरीणां च गौरवं गरिमाणं प्रतिष्ठां जग्राह। राजानः पराजित्य गौरवरहिता विहिताः। पर्वतेभ्यः नैष्ठुर्यं तु कठोरतां तु न जग्राह। ईदृशमेव वर्णनं रघौ—'गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः। श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम्।' एषु सर्वत्र परिसंख्यालंकारः, तल्लक्षणं काव्य-

भास्करद्युतिर्भास्करवर्मापरनामा तनयः शंतनोर्भागीरथ्यां भीष्म इव कुमारः समभवत् । अयमस्य च शैशवादारभ्य संकल्पः स्थेयान्स्थाणुपादारविन्दद्वयादृते नाहमन्यं नमस्कुर्यामिति । ईदृशश्चायं मनोरथस्त्रिभुवनदुर्लभस्त्रयाणामन्यतमेन संपद्यते सकलभुवनविजयेन वा मृत्युना वा यदि वा प्रचण्डप्रतापज्वलनजनितदिग्दाहेन जगत्येकवीरेण देवोपमेन मित्रेण । मैत्री च प्रायः कार्यव्यपेक्षिणी क्षोणीभृताम् । कार्यं च कीदृशं नाम तद्भवेद्यदुपन्यस्यमानमुपनयेन्मित्रतां देवम् । देवस्य हि यशांसि संचिचीषतो बहिरङ्गभूतानि

---

प्रकाशे—'किंचित्पृष्टमपृष्टं वा कथितं यत्प्रकल्प्यते । तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ।' वाहिनीनाथानां शङ्खरत्नयोरुभयोर्हरणं प्राप्तं तत्र शंखहरणं वर्णयित्वा तत्सदृशस्य रत्नस्य हरणापोहः कृतः । सुगृहीतं नाम यस्य, आदरातिशयात् यस्य नाम जनाः सगौरवम् उच्चारयन्ति प्रातःस्मरणीयं च मन्यन्ते । तस्य सुस्थिरवर्मणो देव्यां पट्टमहिष्यां श्यामादेव्यभिधानायां, भास्करस्येव सूर्यस्येव द्युतिर्दीप्तिर्यस्य सः, भास्करवर्मा इत्यपरं नाम यस्य तादृशः, भागीरथ्यां गङ्गायां, शन्तनोस्तन्नाम्नश्चन्द्रवंशजातस्य नृपतेर्भीष्मो देवव्रत इव कुमारस्तनयः समभवत् । अस्य कुमारस्य च अयं स्थेयान् द्रढीयान् संकल्पो निश्चयो यत् स्थाणोः शिवस्य पादारविन्दद्वयादृते चरणकमलयुगलं विहाय नाऽन्यम् अहं नमस्कुर्याम् इति । ईदृशश्चायं त्रिभुवनेऽपि त्रिलोक्यां यत्रकुत्रापि गत्वा दुर्लभः संपादयितुं दुःशकः संकल्पस्त्रयाणामन्यतमेन एव संपद्यते सफलायते । उपायत्रयमात्रसाध्य इति भावः । 'स्थाणू रुद्र उमापतिः' इत्यमरः । त्रयोऽवयवाः अस्येति त्रयम् । 'द्वित्रिभ्यां तयस्यायज्वा' इति त्रिशब्दात् अवयवार्थे तयप्प्रत्ययस्य स्थानेऽयच् । उपायत्रयमाह—सकलस्य भुवनस्य जगतो विजयेन वा, मृत्युना वा मरणेन वा । यदि वा प्रचण्डः प्रताप एव ज्वलनो वह्निस्तेन दिशां दाहो यस्येति बहुव्रीहिसमासः । यस्य प्रखरप्रतापाग्निना दिशो ज्वलन्तीव, यश्च जगति भुवि एकोऽद्वितीयो वीरः स्यात्, तेन देवोपमेन देवसदृशेन मित्रेण सुहृदा । क्षोणीभृतां राज्ञां मैत्री च सख्यं च प्रायः कार्यं प्रयोजनं स्वार्थं व्यपेक्षते इति तादृशी भवति । किमपि प्रयोजनं निमित्तीकृत्यैवेति भावः । कार्यं च किं खलु तद् भवेत् यत् उपन्यस्यमानं श्रीमतः सम्मुखे उपस्थाप्यमानं देवं मित्रताम् उपनयेत् देवस्य कश्चिदीदृशः स्वार्थो नास्ति यो ह्यस्मदधीनः स्यात् यत्साधनाय देवोऽस्माकं सख्यं स्वयमेव कामयेत । 'क्षोणी ज्या काश्यपी क्षितिः' इत्यमरः । क्षोणीं बिभर्ति इति क्षोणीभृत् । क्षोणीपूर्वस्य बिभर्तेः क्विपि रूपम् । देवस्य हि यशांसि संचिचीषतः संजिघृक्षतः, धनानि विभवाः बहिरंगभूतानि गौणानि, हेयानीत्यर्थः । बाहौ भुजे

**धनानि। बाहावेव च केवले निषण्णस्य शेषावयवानामपि साहायकसंपादनमनोरथो निरवकाशः किमुत बाह्यजनस्य । चतुःसागरग्रामग्रहणघस्मरस्य पृथिव्येकदेशदानोपन्यासेनापि का तुष्टिः। अभिरूपकन्याविश्राणनविलोभनमपि लक्ष्मीमुखारविन्ददर्शनदुर्ललितदृष्टेरकिंचित्करम् । एवमघटमानसकलोपायसंपादितपदार्थेऽस्मिन्प्रार्थनामात्रमेव केवलमनुरुध्यमानः शृणोतु देवः । प्राग्ज्योतिषेश्वरो हि देवेनैकपिङ्ग इवानङ्गद्विषा, दशरथ इव गोत्रभिदा, धनंजय इव पुष्कराक्षेण, वैकर्तन इव दुर्योधनेन, मलयानिल इव माधवेन, अजर्यं संगतमिच्छति । यदि च देवस्यापि**

---

एव केवले निषण्णस्य स्वभुजबलमेव केवलमवलम्बमानस्य शेषावयवानामपि चरणादीनामित्यर्थः साहायकसम्पादनमनोरथः साहाय्यकरणाभिलाषो निरवकाशः अलब्धावसरः। यदा बाहुव्यतिरिक्तानि तस्यैव इतराण्यङ्गानि विजयादिव्यापारेषु नापेक्ष्यन्ते तदा इतरजनानां तु तत्र कथैव का। सहायशब्दात् 'योपधाद्गुरूपोत्तमाद्वुञ्' इति वुञि साहायकम्। सहायस्य कर्म साहायकम्। चतुर्णां सागराणां ग्रामः समूहो यस्यां सा चतुःसागरग्रामा चतुःसागरावृता भूरित्यर्थः। सा एव ग्रासः कवलस्तस्य ग्रहणम् आदानं तत्र घस्मरस्य भोक्तुमिच्छोः सकलामेव धरित्रीमात्मसाच्चिकीर्षतः। पृथिव्याः एकदेशस्य खण्डमात्रस्य दानोपन्यासेन दानप्रस्तावेन, का तुष्टिः का तृप्तिः, न कापीति। 'भक्षकस्तु घस्मरोऽद्मर आशितः' इत्यभि० चि०। 'सृघस्यदः क्मरच्' इति क्मरच्। अभिरूपायाः कमनीयायाः कन्यायाः कुमार्याः विश्राणनं समर्पणं तदेव विलोभनं तदपि खलु लक्ष्म्याः कमलाया मुखारविन्दस्य वदनकमलस्य दर्शनेन विलोकनेन दुर्ललिता दुर्विनीता दृष्टिर्यस्य तस्य ते अकिञ्चित्करं मोघमित्यर्थः। 'अभिरूपो बुधे रम्ये' इति मेदिनी। एवम् इत्थं, घटमानैः उपपद्यमानैः संभवद्भिर्वा सकलैरुपायैः सम्पादितः साधितः पदार्थ उल्लिखितो विषयो यस्मिन् सः घटमानसकलोपायसम्पादितपदार्थः, स न भवतीति नञ्समासे, अघटमानसकलोपायसम्पादितपदार्थः। यत्र संभवन्तः सर्वेप्युपाया विफलास्तादृशेऽस्मिन् व्यापारे प्रार्थनामात्रं विज्ञापनामात्रमेव केवलम् अनुरुध्यमानो देवः शृणोतु—प्राग्ज्योतिषेश्वरो हि कामरूपाधिपतिः, अनङ्गद्विषा त्रिलोचनेन एकपिङ्ग इव कुबेर इव, गोत्रभिदा इन्द्रेण दशरथ इव। पुष्कराक्षेण पुण्डरीकाक्षेण कृष्णेन धनञ्जय इव, दुर्योधनेन वैकर्त्तनः विकर्त्तनस्य सूर्यस्य पुत्रः कर्ण इव, माधवेन वसन्तेन मलयानिलो मलयपवनः इव देवेन भवता अजर्यम् अक्षयं स्थिरं संगतमिच्छति। 'अजर्यं संगतम्' इति निपातनात् साधु। कुबेरस्य हि एकं नेत्रं पिङ्गं पीताभं वर्त्तते तेन स एकपिंग उच्यते। 'किन्नरेशो

मैत्रीयति हृदयमवगच्छति च पर्यायान्तरितं दास्यमनुतिष्ठन्ति सुहृद इति ततः किमास्यते समाज्ञाप्यतामनुभवतु विष्णोर्मन्दरगिरिरिव विकटकेयूरकोटिमणिविघट्टनक्वणितकटकमणिशिलाशकलानि गाढोपगूढानि देवस्य कामरूपाधिपतिः। अस्मिन्नातृप्तेरनवरतविमललावण्यसौभाग्यसुधानिर्झरिणि मुखशशिनि चिराच्चक्षुषी लालयतु प्राग्ज्योतिषेश्वरश्रीः। नाभिनन्दति चेद्देवः प्रणयमाज्ञापयतु किं कथनीयं मया स्वामिनः' इति।

---

वैश्रवणः पौलस्त्यो नरवाहनः। यक्षैकपिङ्गिलविलश्रीदपुण्यजनेश्वराः' इति कुबेरपर्यायेष्वमरः। 'सुत्रामा गोत्रभिद् वज्री वासवो वृत्रहा वृषा' इत्यमरः। 'माधवस्तु वसन्ते स्यात् वैशाखे गरुडध्वजे' इति विश्वः। यदि च देवस्याऽपि अत्र भवतोऽपि हृदयं स्वान्तं मैत्रीयति, मैत्रीं सौहार्दम् आत्मन इच्छति इति मैत्रीयति। 'सुप आत्मनः क्यच्' क्यचि चेति ईत्वे रूपम्। यदि देवेनाऽपि नः स्वामिनः सख्यं कामयते, यदि च अत्र भवान् अवगच्छति जानीते, यत् सुहृदः सखायः मैत्रीपर्यायान्तरितं दास्यम् अनुतिष्ठन्तीति यत् सखायः सख्यप्रच्छन्नं दासत्वं समाचरन्तीति। ततः किमास्यते किं विलम्ब्यते ? समाज्ञाप्यताम् आदिश्यताम्। मन्दरगिरिर्मन्दराचलः विष्णोरुपेन्द्रस्य इव कामरूपाधिपतिः कुमारः देवस्य गाढोपगूढानि गाढालिङ्गनानि अनुभवतु। आलिंगनानि विशिनष्टि—विकटानां विपुलानाम्, केयूरकोटिमणीनाम् अङ्गदाग्ररत्नानां विघट्टनेन संघर्षेण क्वणितानि क्वणन्ति कटकस्य—विष्णुपक्षे मन्दरशिखरस्य नृपपक्षे च हर्षभुजधृतवलयस्य मणिशिलाशकलानि रत्नखण्डानि येषु तानि। विकटं विपुलं बृहत्। इति अभि० चि०। 'कटकं वलये सानौ' इति विश्वः। प्राग्ज्योतिषेश्वरस्य कामरूपेश्वरस्य श्रीः लक्ष्मीः तस्याः अधिष्ठानं कुमारो वा अस्मिन् श्रीहर्षसम्बन्धिनीत्यर्थः, मुखशशिनि वदनचन्द्रे, आतृप्तेः तृप्तिपर्यंतं चिरात् सुचिरं चक्षुषी नयने लालयतु प्रीणयतु। मुखशशिनं विशिनष्टि—लावण्यं च सौभाग्यं च लावण्यसौभाग्ये ते एव सुधा इति लावण्यसौभाग्यसुधा तस्या निर्झरः इति लावण्यसौभाग्यसुधानिर्झरः, अनवरतः सन्ततो विमलश्च सौभा०···निर्झरः अनवरत ······निर्झरः सोऽस्यास्तीति अनवरत··निर्झरी तस्मिन्। यस्मात् वदनात् विमलं सुधामयं लावण्यं सौभाग्यं च निरन्तरं स्रवति तस्मिन्। लावण्यलक्षणं तु 'मुक्ताफलस्य यच्छायातरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमुदाहृतम्।' 'निर्झरस्तु झरः सरिः। उत्सः स्रवः प्रस्रवणम्।' इत्यभि० चि०। नाभिनन्दति चेत् देवः प्रणयं यदि तु श्रीमान् नः प्रार्थनां न रोचयते आदिशतु देवः किं मया निवेदनीयं स्वामिने इति।

However there are only the modest beginning in the directi[on] of social security — a case of little done and vast undone. Let us hope ~~we~~ that quick progress will be made in this sphere. It is bound to take a long time ~~be[illegible]~~ before we are able to attain the standa[rd] of the advanced countries like U.S.A. & U.K. where social security has been provided to the people from the cradle to the grave.

[illegible]